देहो धुवं विणासी तस्संजममाइणं फलं तस्स। वच्चइ झुलियं जीयं ता मा धम्मे पमाएह ॥१३०॥ सिद्धंपि महाविज्जं असरंतो निप्फलं जहा कुणइ। तह धम्मपमाइल्लो हारइ पत्तंपि मणुयत्तं ॥१३१॥ जह दुलहं कप्पतरुं लहिउं मग्गइ वराडिअं मूढो। मुक्खफले मणुअत्ते तह अबुहो मग्गए विसए ॥१३२॥ पत्र १७९

इह–भवजलनिहिम्मि चिंतारयणं व सुदुल्लहं मणुअजम्मं। रोरस्स निहाणंपिव तत्थवि सम्मत्तमइदुलहं ॥४॥ कहकहवि तंपि लहिउं तस्सुद्धिकए करेह पइदिवसं। मज्झजहन्नुकोसं चिइवंदणयं जहासमयं ॥५॥ तत्थ–एगनमुक्कारेणं बहुविहसक्कत्थएण व जहन्ना। इरियनमुक्काराईपणिहाणंतेणावि इगेणं ॥६॥ सच्चिअ इगचूलथुई उज्जोअगरंति जाव मज्झिमया। पणदंडथुइचउक्कगपणिहाण विणत्ति जं भणियं ॥ ७ ॥ 'निस्सकडमनिस्सकडे'त्यादि, सक्कत्थयचिइवंदणथयनामथयाइ तिन्नि थुइदंडा। एवं पणदंडा चउथुइजुया अंतसक्कथया ॥ ८ ॥ जा थयपणिहाणता उक्कोसा दुगुणपंचदंडा वा। पणसक्कथया वा थयपणिहाणत्तिय थुइतिगंता ॥९ ॥ भणितं च–'दुब्भिगंधमलस्सावि, तणुरप्पेसऽण्हाणिया। उभओ वाउवहो चेव, तेण ठंति न चेइए ॥१०॥ तिन्नि वा कड्ढई जाव, थुइओ तिसिलोइया। (चैत्यवंदनान्ते प्रणिधानरूपा) ताव तत्थ अणुन्नायं, कारणेण परेणवि ॥११॥ जओ–निययभवणं सुरभवणं व होइ तह किंकरिव्व चक्कसिरी। सुहरं विलसंति सतणुम्मि उग्गसोहग्गपमुहगुणा ॥ १२ ॥ सुहउत्तारो गुप्पयजलं व अवि एस हुज्ज भवजलही। सिद्धिसुहंपि अभिमुहं नराण चिअवंदणपराणं ॥१३॥ अविअ–विसमंपि समं सभयंपि निब्भयं दुज्जणोवि सुयणिव्व। विहिविहियचेइवंदणपभावओ जायइ जियाणं ॥१४॥ पत्र १८४

कोहो पीइं पणासेइ, माणो विणयनासणो। माया मित्ताइं नासेइ, लोभो सव्वविणासणो ॥५१॥ कोहो य माणो य अणि-

ग्गहीया,माया य लोहो य पवड्ढमाणा । चत्तारि एए कसिणा कसाया, सिंचंति मूलाइं पुणब्भवस्स ॥५३॥ उवसमेण हणे कोहं, माणं मद्दवया जिणे । मायं चऽज्जवभावेणं, लोभं संतोसपोसओ (ओ जिणे) ॥५४॥ पत्र १८७

पंचांगचंगमतिरंगभरेण भव्यो, यो वंदते जिनपतिं विगतप्रमादः। तेनेऽत्र तेन वसुधातलये यशः स्वं, दौर्ग दुःखतरुखंडमखंडि शीघ्रम् ॥५॥ तं प्राज्यराज्यकमला कमलीकरोति, तस्मै सदा स्पृहयति त्रिदशासुरश्रीः। तस्येन्दुकाशकुसुमोज्ज्वलपुण्यराशेरद्वैतसौख्यपदवी न दवीयसी स्यात् ॥६॥ पत्र १९७

यः सर्वांगगुरुप्रमोदपुलकः पंचांगभूस्पर्शनो, दुष्टानंगविघातिनो जिनपतेः पादद्वयं वंदते । भुक्त्वाऽशेषपडंतरंगरिपुजित् सप्रांगराज्यश्रियं, हत्वाऽष्टांगमशेषकर्मपटलं प्राप्स्योत्यसंगं पदम् ॥२०॥ पत्र १९८

इह तुल्लेवि नरत्ते एगे पहुणो पयाइणो अन्ने । धम्माधम्मफलं ता नाउं भविया ! कुणह धम्मं ॥५२॥ जह इहलोइयकज्जे सव्वत्थामेण उज्जमइ लोओ। तह जइ लक्खंसेणवि परलोए ता सुही होइ ॥५३॥ धम्मेण विणा जइ चिंतियाइं लब्भंति इत्थ सुक्खाइं । ता तिहुयणेऽवि सयले न कोऽवि इह दुक्खिओ हुज्जा ॥ ५४ ॥ अह भणइ मुणी इहयं भद्द ! भवीणं भवंति भद्दाणि । पुण्णेण सुचिण्णेणं पावेणं पुण अभद्दाणि ॥५८॥ पत्र २२२

इह चउगइभवगहणे कहंपि लद्धूण माणुसं जम्मं । जे नहु कुणंति धम्मं ते नूणं अत्तणो अहिया ॥ ३१३ ॥ जेणं करयलपरिकलियसलिलबिंदुव्व परिगलइ आउं । दारंति दारुणा दारुयं व रोगा पुणो देहं ॥३१४॥ बहुविहकिलेसपत्तावि चोरजलजलणनिवइपमुहेहिं । संपासंपायचला खणेण खलु नासए लच्छी ॥ ३१५ ॥ पियमायपुत्तसुकलत्तमित्तसयणाइइट्ठसंजोगो । खणदिट्ठन-

ट्टरूवो जल हिकल्लोलसंकासो ॥३१६॥ पडुपवणुप्पाडियअकतूलतरलं सयावि तारुण्णं । चंपय मुक्करंगभंगुरं इत्थ विसयसुहं ॥११७॥ ता सासयसुहहेउंमि सयलभवदुक्खलक्खदलणसहे । भविया ! तु पमायं सद्धम्मे आयरं कुणह ॥३१८॥ पत्र २३८

अणवरयं मुणिनमणेण सिरिजिणिंदाण पूयकरणेण । कोहाइनिग्गहेणं पावमिणं भे यं गमिही ॥३०॥ पत्र २४७

आह गुरू निवनंदण ! जियरक्खासच्चवयणबंभेहिं । मंसाइवज्जणेण य गम्मइ एयारिससुरेसु ॥ २९ ॥ पयईइ तणुकसाओ दाणरओ सीलसंजमविहूणो । मज्झिमगुणेहिं जुत्तो जीवो अज्जेइ नरजम्मं ॥३०॥ उम्मग्गदेसओ मग्गन ओ गूढहिययमा ई। सीलो य ससल्लो तिरिआउं बंधए जीवो ॥३१॥ जीववहणेण पलभक्खणेण पारद्धिप हवसणेहिं । परधणहरणाईहि य गम्मइ जीवेहिं नरए ॥३२॥ गुरुराह सुण उवायं कुमार ! तं देसु वखवणकए । नियदुक्कडेसु मि ामिदुक्कडं अ णकरणेण ॥३५॥

जहा विसं कुट्ठगयं, मंतमूलवि रया । विज्जा हणंति मंतेहिं, तो तं हवइ निव्विसं ॥१॥ एवं अ विहं कम्मं, रागदोससम-ज्जियं । आलोयंतो य निंदंतो, खिप्पं हणइ सुसावओ ॥२॥ आवस्सएण एएण सावओ जइवि बहुरओ होइ । आलोयंतो य निं-दंतो खिप्पं हणइ सुसावओ ॥३॥ पत्र २७४

भो भो भवण्णवे इह मज्ज णाण भव्वसत्ताणं । नित्थारणे समत्थो धम्मुच्चियऽ बोहित्थो ॥७१॥ सो दुविहो णि-गिहिधम्मभेयओ तत्थ समणधम्मो य । सावज्जकज्जव ण निरवज्जासेवणपहाणो ॥७२॥ पत्र २७७

भत्तिबहुमाणपूयाथुइसेवानमणवंदणाईहिं । लहइ जि ईण जिओ तित्थयरत्ताइ वररिद्धी ॥ २४ ॥ नियमइ य तित्थ त्तं नियमा म ओ तिहावि सुहलेसो । आसेविएहिं बहुसो वीसाए अन्नयरएहिं ॥२५॥ जओ-जिण १ सिद्ध २ पवयण ३ गुरु ४

थेर ५ बहुस्सुय ६ तवस्सि ७ वच्छल्लं । नाणुवओगो ८ दंसण ९ विनया१०वसयविहि ११ सीलवयं १२ ॥ ३० ॥ अणइक्कमो खणलव १३ तव १४ चय १५ वेयावच्च १६ विहिसमाही य १७ । अपुव्वनाणगहणं १८ सुयभत्ति १९ पभावणा वीसं २० ॥ ३१ ॥ पत्र २०५

जं इह जियाण जायइ मणोरमं रूवरिद्धिमाईयं । तं धम्मफलं नूणं विवरीयं पुण अहमस्स ॥ ५ ॥ धम्माभासेहिं समाउलंमि लोए जहट्ठिअं धम्मं । आसन्नभाविभद्दा विरलच्चिय केइ जाणंति ॥ ६ ॥ विरलाणवि ते विरला धम्मविसेसं वियाणिउं सम्मं । जं इह भणियं तं तह कुणंति जेणेह निरवेक्खं ॥ ७ ॥ सो पुण धम्मो पंचमपुरिसमसो इह अणोवमो नेओ । राजा—भयवं! को सो पंचमपुरिसोवमो धम्मो ? ॥ ८ ॥ मुनिः—नरवर जह पीयंगे भणिअं वीरेण गोअमाईणं । पंचमपुरिससरूवं तहेगचित्तो निसामेहि ॥ ९ ॥ पृष्ठ ३५१

जत्थ य विसयविराओ कसायचाओ गुणेसु अणुराओ । करुणाएँ अप्पमाओ सो धम्मो सिवसुहोवाओ ॥ ३४ ॥ जइधम्मो तत्थ समग्गसंगविगमे गयंगिवग्गवहो । विहियअसायकरायचाओ सिवगमणपवणगुणो ॥ ३५ ॥ तदसत्ताणं सत्ताणऽगारधम्मोऽवि होइ गुणहेऊ । लहुभोयणं व लंघणकरणासत्तस्स रोगिस्स ॥ ३६ ॥ इय जाणिय जे सम्मं धम्मं धारेंति ते सया धन्ना । जे निरइयारमेयं पालंती ताण किं भणिमो ? ॥ ३७ ॥ जओ—धन्नाणं विहिजोगो विहिपक्खारागा सया धन्ना । अन्यच्च—विहिबहुमाणी धन्ना विहिपक्खअदूसगा धन्ना ॥ ३८ ॥ भणियं च—आसन्नसिद्धियाणं विहिबहुमाणो उ होइ सयकालं । विहिचाओ अविहिभत्ती अभव्वजिय दूरभव्वाणं ॥ ३९ ॥ पृ. ३५६

जं बुद्धीण अविसयं अगोयरं जं च पुरिसयारस्स । जं इह अइदुस्सज्झं जं च ठियं दूरदेसंमि ॥ ६२ ॥ तंपिहु पुन्नोदयओ संपज्जइ पुव्वविहियसुकयाणं । नहि हेउमंतरेणं कयावि किर जायए कज्जं ॥६३॥ तं पुण पुन्नं अहिगारसुद्धचिइवंदणाविहाणेण । जिणनाहपूयणेणं दाणाईधम्मकरणेणं ॥ ६४ ॥ सुमुणिपयसेवणाए निच्चं चिय धम्मसत्थसवणेण । इंदियविणिग्गहेणं निम्मलसंमत्तधरणेणं ॥६५॥ आसववेरमणेणं साहम्मियवग्गवच्छलत्तेण । कल्लाणमित्तजोगेण गच्छइउ उवचयं परमं ॥६६॥ पृ. ३६२

दुलहं लहिय नरभवं भविया! भवियत्तयानियोगेण । चिइवंदणाइधम्मं करेह जइ महइ सिवसंमं ॥३५॥ यतः—पूया जिणिंदेसु रई वएसु, जत्तो य सामाइयपोसहेसु । दाणं सुपत्ते सवणं सुतित्थे, सुसाहुसेवा सिवलोयमग्गो ॥३६॥ पृ. ३६८

आर्यानार्येषु मौनेन,विहृत्याब्दसहस्रकम् । पुरे पुरिमतालाख्ये, ययौ श्रीवृषभोऽन्यदा ॥१॥ उद्याने तत्र शटकमुखे वटतरोरधः । उत्तराषाढभे कृष्णैकादश्यां फाल्गुने विभुः ॥ २ ॥ पूर्वाह्णेऽष्टमभक्तेन,केवलज्ञानमासदत् । महिमानं ततश्चक्रुः,सर्वे देवासुरादयः ॥३॥ भरतस्यायुधागारे, चक्ररत्नं तदाऽजनि । युगपत्केवलं तच्च,राज्ञे पुंभिर्निवेदितम् ॥४॥ अचिंतयत्ततो राजा,किं पूज्यं प्रथमं मया ? । क्षणान्निर्णीतवांस्तत्र, पूज्यः प्रेत्यसुखावहः ॥ ५ ॥ रुदंतीं पुत्रशोकेन, नीलच्छन्नदृशं ततः । सिंधुरस्कंधमारोप्य, मरुदेवीं स्वयं नृपः ॥६॥ जिनं नंतु व्रजन्नूचे, मातः! पश्य प्रभोः श्रियम् । अनन्यसदृशीं देवासुराणामपि दुर्लभाम् ॥७॥ हर्षाश्रुप्रगलच्छाया,सा पश्यंती प्रभुश्रियम् । क्षणात् कर्मक्षयं कृत्वा, निर्वृत्ता शुभभावतः॥८॥ ततः प्रथमसिद्धोऽयमित्यभ्यर्च्य कलेवरम् । तस्याः क्षीरमहांभोधौ, चिक्षिपेऽनिमिषैर्मुदा ॥ ९ ॥ पृ. ३८०

दुलहं लहिय नरभवं भविया भवियव्वयानियोगेण । इहपरलोयहियकरं जहमत्तीए कुणह धम्मं ॥ ३३ ॥ पृ. ४१६

भणइ मुणी भो निवसुय! दव्वूसियप्पमुहबहुविहविगप्पो। एसंतरंगरूवो काउस्सग्गत्ति पवरतवो ॥१४॥ नवरमिमो दुविगप्पो चिट्ठाए अभिभवे य णायव्वे। चिट्ठाएऽणेगविहो कालपमाणं च तं बहुहा ॥१५॥ तथाहि—देसियराइयपक्खियचाउम्मासिय तहेव वरिसे य। नियया काउस्सग्गा इरियाइसु अनियया हुंति ॥१६॥ सायसयं गोसद्धं तिन्नि सया पक्खियंमि ऊसासा। पंचसया चउमासे अट्ठसहस्सं च वरिसाए ॥१७॥ अनिययउस्सग्गेसु य इरियाइसु पचवीस ऊसासा। सेसेसु अट्ठ पट्ठवणपडिकमणाईसु सगवीसा ॥१८॥ अभिभविउं दुकंमं कुद्धेण सुराइणा व अभिभविओ। ज कुणइ काउस्सग्गं सो अभिभवकाउसग्गत्ति ॥१९॥ कालपमाणं च इहं उक्कोसं वरिसमवहिसाहंसु। बाहुबलिप्पमुहाणं जहन्नमंतोमुहुत्तं तु ॥ २० ॥ नवरं अभिभवउस्सग्गवत्तिणो अगणिसप्पमाईहिं। खोभेऽवि अकयकज्जस्स जुज्जए नेव परिचइउं ॥२१॥ वासीचदणकप्पो जो मरणे जीविए य समदरिसी। देहे अप्पडिबद्धो काउस्सग्गो हवति तस्स ॥२२॥ तिविहाणुवसग्गाणं दिव्वाण य माणुमाण तिरियाणं। संममहियासणाए काउस्सग्गो हवइ सुद्धो ॥२३॥ पृ. ४२५

आत्माऽयमनल्पविकल्पकल्पनोत्पन्नपापपरिणामः। हरिकरिविसविसहरसत्तुणोऽवि दूर विसेसेइ ॥ ८४ ॥ यस्मात् करिहरिमुख्या रुष्टा अपि ददति मरणमेकभवम्। अप्पाउ दुप्पउत्तो देइ अणंताइं मरणाइं ॥ ८५ ॥ किंच—अप्पा नइ वेतरणी, अप्पा मे कूडसामली। अप्पा कामदुहा धेनू, अप्पा मे नंदनं वनं ॥८६॥ अप्पा कत्ता विकत्ता य, दुहाण य सुहाण य। अप्पा मित्तममित्तं च, दुप्पट्ठियं सुपट्ठियं ॥८७॥ तद् भव्यैरयमात्मा जेतव्यो मुक्तिमिच्छुभिः सततम्। जेण जिओ चिय आया तेण जियं तिहुयणंपि जओ ॥८८॥ जो सहस्सं सहस्साणं, संगामे दुज्जए जिणे। एगं जिणिज्ज अप्पाणं, एस से परमो जओ ॥८९॥ पृ. ४३३

# सूक्तिसाक्षिमुखानि

| | | | | | |
|---|---|---|---|---|---|
| देवपूजा गुरूपास्तिः | २२४ | पुत्ति ! पवित्तं सीलं लि | २२७ | कइया सुतित्थपडिमा, | २७६ |
| जिणदिट्ठीगोयरे तो, | २२५ | सेविज्ज नयमग्गं, | २२७ | समयमइनिम्महणं, | २७६ |
| भणिउं नमो जिणाणं, | २२६ | नरो जं जीवंतो नियइ भद्दसए | २२९ | उब्भडसडाकडप्पो | २७६ |
| करधरियजोगमुद्दो, | २२५ | अन्नह चिंतेइ नरो | २३० | संकल्पोऽपि न कल्पतल्पजतरौ–, | २७६ |
| निसीहियाइ पविसित्तु, | २२५ | जेणेस न कारो पत्तो, | २३१ | अहंःसंहतिमाशु लुंपति | २७७ |
| ण्हवणविलेवणआभरण– | २२६ | पंचनमुक्कारसमा अंते | २३१ | इच्छामिच्छा तहक्कार, | २७८ |
| दाहिणदिसा जहोचिय– | २२५ | पाणिवहालियचोरिय– | २७४ | उवसंपया य संमं, | २७७ |
| अनिरिक्खंतो तिदिसिं, | २२५ | महुमंसभक्खणेणं, | २७४ | गुरुभत्ती तवसत्ती, | २७७ |
| धन्नाणं विहिजोगो | २२६ | गुरुकोवमाणमायालोभेहिं, | २७४ | बालाईपडियरणं, | २७७ |
| साहम्मियाण वच्छल्लं | २२६ | जिणदिट्ठनाणदंसण– | २२५ | जं होइ सिद्ध तो | २८० |
| धम्मियजणेहिं न विणा | २२६ | साहूण साहुणीणं | २७५ | तवसो नत्थि दुरप्पं, | २८२ |
| साहम्मियम्मि पत्ते नियघरे | २२६ | मिच्छत्तं अहिगरणं, | २७५ | जिनानां मन्दिरं कुर्यात्, | २८८ |
| तम्हा सव्वपयत्तेण | २२६ | हा दुट्ठु कयं हा दुट्ठु, | २७५ | कयावि किं खत्तियारणे विमुहा | ३६० |
| अप्पस्स भावणाओ | २२६ | महद्भिः पापात्मा विरलमपि संगं न लभते, | २७५ | अहवा निम्मेराणं, हवंति एवं– | ३६० |

अइगरुयपुन्नपब्भारपरिगया, ३६१
तव्विवरीया पुण गुरुसमिद्धि- ३६१
नहि हेउमंतरेण कयावि किर जायए
कज्जं ३६२
संचितसुकृतभराणां जागर्त्ति सतां
परं धर्म्मः ३७४
पचति हि खलु पापिनां पापम् ३७४
जं बोहिरयणरहिओ, ३७६
दिव्वस्स गई अहो दिव्वा ४०३
सच्छंदपयाराओ सुहेण विलसंति
वुद्धीओ ३?२
एतद्धि महापापं परो, ४२०
असुहाणं कम्माणं जं असुहो चेव
जायइ विवागो। ४३७

सव्वो पुव्वकयाणं कम्माणं पावए
फलविवागं, ४३७
चलति कुलाचलचक्रं मर्यादां
लंघयन्ति जलनिधयः ४३७
सो विरलो कोऽपि जणो दुहियं
जणिऊण जो सुहिओ ४३८
जातेति चिंता महतीति शोकः,
कस्मै प्रदेयेति महान् विकल्पः, ४३८
निरवज्जा दहइ मणं विणट्ठसीलावि
देइ दुक्खाइं ४३८
गुणरिद्धी दूरं वड्ढियावि अविणय-
पवणपडिहणिया ४३९
नीहारहारधवलोऽवि वच्छ !
सच्छोवि सुगुणसमुदओ ४३९

अच्चंतपियोवि वज्जिज्जइ पुरिसो
विणयवज्जिओ दूरे ४३९
इय दुव्विणयत्तणदोसनिवहमव-
लोइऊण वुद्धीए ४३९
विणयाओ हुंति गुणा गुणेहिं
लोगोऽणुरागमुव्वहइ ४३९
विणया नाणं नाणाउ दंसणं
दंसणाउ चारित्तं ४३९
चडइ नमंताण गुणो आरूढगुणाण
होइ टंकारो ४३९

-०*०-

# साक्षिग्रन्थनामानि

—०※०—

## साक्षिश्लोकाद्यपदानि

सम्पूर्णा विषयाद्यनुक्रमणिका:

## श्रीसंघाचारविधेरुपक्रमः

श्रीसंघाचारत्वं–जगति विदितमेतद् विपश्चितां यदुत श्रीमज्जिनाज्ञानुसारिणां समुदायः सम्यग्दर्शनज्ञानचारित्ररूपमोक्षमार्गं बिभ्राणानां समुदायश्च संघ इति भण्यते, यतो गुणसंघातमया एते एव, एवं च यथा सर्वेषामेवाज्ञानुसारिणां संघत्वं व्यवहारपतितं तथैवैकस्यापि श्रीजिनेन्द्रवचनानुसारिणो गुणसंघातत्वात् अव्याहतमेव संघत्वं, तथा च समुदाये संकेतिताः शब्दा अवयवेऽपि केवलाकारस्य स्वरत्ववत् प्रवर्त्तन्ते इति न्यायेन केवलस्यापि साध्वादेः श्रीसंघत्वं, तथा गुणसंघातार्थेनार्थवत्त्वादप्येकस्यापि साध्वादेः श्रीसंघत्वमव्याहतमेव, एवं च न चैत्यवंदनादिकः संघाचारः समुदायसहकृतः, किंतु प्रत्येकमेव साध्वादीनामाचरणीय एव, यद्वा अविशेषेणैव चैत्यवन्दनायाः सर्वैरेव साध्वादिभिराचरणीयत्वात् संघाचारत्वं सामायिकादीनां संघाचारत्वे सत्यपि देशसर्वविरतिमतां तानि सामायिकादीन्याचारविषयाणि, परं यावज्जैनं चैत्यवन्दनाया एवाचरणीयत्वात् यथावदस्या एव संघाचारता,

आवश्यकता–अत एव श्रीमहानिशीथसूत्रप्रतिपादिता चैत्यवन्दनाया आवश्यकता संगतिमंगति, किंच–श्रीमहानिशीथे श्रावकवर्गमाश्रित्य स्पष्टं त्रिकालं चैत्यवन्दना प्रतिपादिता, न केवलं प्रतिपादिता, किंतु प्रातरुदकपानात् मध्याह्ने भोजनात् सायं शय्यातलाक्रमणाच्च प्राक् तस्या अवश्यकर्त्तव्यता तदीयाभिग्रहस्य करणीयतां प्रतिपाद्य नियमिता,

चैत्यानां वंद्यता–श्रीमदुत्तराध्ययनेषु सम्यक्त्वपराक्रमाध्ययने ज्ञानदर्शनचारित्राणां संपत्तिर्बोधिलाभस्य जनकता च स्तवस्तुतिमंगलेन स्पष्टतरं निर्दिष्टा, स्तवादिषु च प्रणिधानमध्ये स्तवस्य कायोत्सर्गानन्तरमेव स्तुतेः चैत्यवन्दनाकरणस्य प्रारंभ एव च

मंगलकाव्यानां चैत्यवन्दनारूपाणां भावादावश्यकता, चैत्यवन्दनाकरणस्य बोधिलाभज्ञानादिहेतुतां च आज्ञागमाभ्यां निश्चित्य कस्कः सकर्णो नाद्रियेत तस्यां, किंच चैत्यानां वन्दनीयत्वं श्रीभगवत्युक्तजंघाचारणादिभिः कृतां चैत्यवन्दनां दृष्ट्वा कः श्रद्धालुर्न श्रद्दधीत?,

चैत्यवंदनाविधेः प्राचीनता–श्रीमत्यामावश्यकचूर्णौ प्राभातिकप्रतिक्रमणे प्रान्त्ये 'देवे वंदइ' इत्युक्तेः श्रीमदुत्तराध्ययनेषु 'थुइमंगलं करित्ताणं' इति 'कुज्जा सिद्धाण संथवं' इत्युक्तेश्च श्रीमहानिशीथे चैत्यवन्दनाया आवश्यकत्वोक्तेः प्रतिक्रमणादिषु चैत्यवन्दनाया अकरणे प्रायश्चित्तस्य प्रतिपादनात् श्रीज्ञातधर्मकथाजीवाभिगमविवरणादिषु श्रीमद्भिर्हरिभद्रसूरिप्रभृतिभिः 'प्रसिद्धेन चैत्यवन्दनविधिने'त्युदीरणात् श्रीमति पंचाशके दशत्रिकादिप्रतिपादनात् श्रीपंचवस्तुकवृत्तौ द्वितीयप्रणिपाततदनन्तरविधेरुदितत्वात् श्रीललितविस्तरावृत्तौ चैत्यवन्दनाक्रमस्य कथनात् भगवता श्रीहेमचन्द्रसूरिणा श्रीयोगशास्त्रवृत्तौ सविस्तरं चैत्यवन्दनाविधेः प्रतिपादित्वाच्च विधेरेतस्याः प्रत्नतरत्वे न केनापि विवदितुं शक्यं ।

भाष्यस्य प्राचीनत्वं–भगवद्भिः श्रीदेवेन्द्रसूरिभिर्भाष्यमेतत् चैत्यवन्दनाया देववन्दनभाष्यतया न नूत्नमाविर्भावितं, यतः श्रीमद्देवेन्द्रपादचरणचंचरीककल्पाः प्रस्तुतभाष्यस्य वृत्तेर्विधातारः श्रीधर्मकीर्त्तयः स्पष्टमाहुरुपसंहारे इदं 'तीर्थकृत्प्रज्ञापितं गणधराद्युक्तं बहुश्रुतपारम्पर्यागतं चैत्यवन्दनाया विधिस्वरूपादि श्रीमद्देवेन्द्रसूरिभिर्भाष्यतया प्रदर्शितं, न पुनः किमप्यत्र नूतनं' किंच–प्रकृतवृत्तौ श्रीशान्तिसूरिकृतस्य चैत्यवन्दनभाष्यस्य स्थाने स्थाने बृहद्भाष्यतामाविर्भाव्य साक्षितया निर्देशात् श्रीशालिसूरीयभाष्यस्य श्रीलघुभाष्यस्य च निर्देशनाद् भाष्यकरणपद्धतिः प्रत्नतरैवेति निर्णेतुं न दुश्शकं,

वृत्तेरानन्तर्यं—श्रीमद्भिर्देवेन्द्रसूरिभिर्भाष्यस्य संदृब्धत्वादेतेषां श्रीमतामन्तेवासिभिरेव श्रीधर्मघोषसूरिभिर्वृत्तेरस्याः श्री-

संघाचारापराभिधानाया विधानात् वृत्तिस्फुटितानां पदार्थानां न कथंचनापि मूलग्रन्थस्थितार्थविवक्षाया लेशतोऽपि बाधकता, गुरुशिष्यत्वसंबंधश्चैतेषां पुरस्तात् निर्देक्ष्यमाणानेकग्रन्थपाठात् गम एव, तथा च ये ये दृष्टान्ता यत्र यत्राधिकारे श्रीमद्भिर्वृत्तिकृद्भिर्वितता न ते मूलकृतां विवक्षामन्तरेणेति न निश्चेतुं दुःशकं,

ग्रंथे मतान्तराणां खंडनं—श्रीसंघाचाराभिधानेऽत्र वृत्तिग्रन्थे निम्ननिर्दिष्टानां चैत्यवंदनाविषयकसूत्रसंबंधिनां मतान्तराणां खंडनमुपलभ्यते—

१ रात्रौ मन्दिरे गमनं निषिध्य यो विम्बानां तदा स्तुत्यादीन् निषेधयति खरतरादिस्तस्य वसुदेवहिण्डीग्रन्थाक्षरैरेव विहितं खंडनं

२ श्रीमज्जिनानां पुरस्तात् नैवेद्यफलवल्यादीनां पूजाया निषेधं प विकादिर्यस्तनोति तस्यापि श्रीवसुदेवहिण्ड्यक्षरैरेव खंडितं मतं

३ यश्च श्रीपंचपरमेष्ठिनमस्कारे छन्दोभंगनाम्ना होइत्तिपाठे बद्धाग्रह आंचलिकस्तस्यापि श्रीमहानिशीथसूत्रश्रीआवश्यकसूत्रीयमलयगिरिकृतवृत्तिश्रीप्रवचनसारोद्धारादिग्रन्थपाठैर्विहितं विस्तरेण प्रतिविधानं,

४ यश्च श्रीजिनपस्याग्रे ईर्यापथिक्यां स्थापनाचार्यस्थापनरसिकस्तस्यापि श्रीस्कंदकचरितेन साधितं समाधानं

५ यश्च नाभिमन्यते सिद्धानां पूजां सोऽप्यावश्यकाचारांगव्याख्याश्रीविशेषावश्यकभाष्याक्षरैः सिद्धानामर्ह द्वाच्यतां पूज्यतां चोपदर्श्य निरुत्तरी कृतो नीरुद्धं च तन्मतं

६ यश्चैर्यापथिक्या दैवसिकत्वादिप्रतिक्रमणतामूरीकृतवान् सोऽपि निराकृत आवश्यकीयकायोत्सर्गस्थानदर्शनेन

७ यश्च सर्वानुष्ठानानामैर्यापथिक्याः प्रतिक्रमणमादौ न मतवान् तस्यापि श्रीमहानिशीथदशवैकालिकाद्यक्षरैर्निरुत्तरतां वि-

तीर्णवन्तः पूज्यपादाः

८ यश्च चैत्यवन्दनायां सुरस्मरणस्य निषेधं निश्चितवान् तस्यानेकशः सुरस्तुतिकायोत्सर्गयोर्नियततां प्रदर्श्य सूचितवांसो मिथ्यात्वमोहान्धतां ॥ इत्येवमादीन्यनेकानि मतान्तराणि तत्रभवद्भिरुन्मूलितानि मूलतः, याथातथ्येन तज्ज्ञानं तु सकलशास्त्रार्थावबोधेनैव बोध्यं,

स्तुतिचतुष्कपद्धतिः—यद्यपि श्रीवर्धमानसूरीणां श्रीमदभयदेवसूरिपितामहानां शिष्यवरैः श्रीशोभनमुनिभिः प्रतिजिनं स्तुतिचतुष्कं कृतं प्रख्यातमेव,विधिवादेन तु भवविरहकालात् प्राक्तनत्वं,परं श्रीमद्भिः प्रतिजिनमेकैकां स्तुतिं विरचय्य सर्वजिनादिस्तुतयः प्रान्त्यभागे न्यस्ताः, न चेयं पद्धतिरपि श्रीमदुपज्ञा, यतः श्रीजैनस्तोत्रसंग्रहेऽप्येवमनेकाचार्यकृताः स्तुतयः पूर्वपुरुषसमादृता विद्यन्ते,तद्यथा—१ पृष्ठे १२० श्रीपालसूत्रिताः २ पृष्ठे ७० श्रीचारित्ररत्नरचिताः ३ पृष्ठे पूर्वाचार्यविदब्धाः ४ पृष्ठे २०६ जिनपतिप्रतताः ५ पृष्ठे २२० जिनेश्वररचिताः ६ पृष्ठे २१६ जिनप्रभीयाः, तथा च स्तुतिचतुष्ककरणं न नूतनं, सुरस्मरणस्य नियतता च श्रीमद्भिरनेकशोऽनेकधोद्भाविता

श्रीमतां गच्छः—प्रकृतप्रकरणकाराः श्रीधर्मघोषसूरयः श्रीजैनशासनाविच्छिन्नाविरुद्धपारंपर्यप्रधानश्रीमतस्तपोगच्छस्य विभूषणाः, यतो नैष गच्छोऽविचलां चतुर्दशीं विलोप्य पूर्णिमाप्रवर्त्तकवत् मुखवस्त्रिकां शास्त्रसमुदायसिद्धां प्रतिषिध्याञ्चलग्रहणप्रवर्त्तकवच्च नवीनप्रवर्त्तनोत्थनामधारकः, न च खरारटनखरतरवत् 'सुरवर वर लद्ध' इत्यादिषु प्राक्तनप्रबन्धेषु 'खरयर वर लद्ध' इत्यादि स्वीकर्तृवत् दुर्गुणख्यातिभृच्च, किंतु निर्ग्रंथत्वपराङ्मुखवृत्तिपरायणीभवनभंगीरतः, निजकठोरभापकतानिबन्धनखडतलाभिधानरूढेः

गुणेन निर्ग्रंथवत् कोटिमंत्रजापात् कोटिकवच्च मोक्षमार्गाद्वितीयभूषणतपोरूपगुणभूषितत्वात् तपोगच्छाभिधान एषः,न च यथा खरतराणां खरतरेत्यभिधा त्रिचतुश्शताब्दीं यावत् तत्परंपराग्रन्थादिषु नोपलब्धा दीर्घचक्षुष्कैरपि तै तथेयमपीति वाच्यं,यतः श्रीमद्देवेन्द्रसूरिभिरेव श्रीकर्मग्रन्थवृत्तिप्रशस्तौ स्वयंप्रतिपादितमिदं "क्रमात्प्राप्ततपाचार्येत्यभिख्या भिक्षुनायकाः। समभूवन् कुले चान्द्रे, श्रीजगच्चन्द्रसूरयः ॥४॥ जगज्जनितबोधानां,तेषां शुद्धचरित्रिणाम् । विनेयाः समजायन्त "श्रीमद्देवेन्द्रसूरयः" ॥५॥ स्वान्ययोरुपकाराय, श्रीमद्देवेन्द्रसूरिणा । स्वोपज्ञशतकटीका, सुबोधेयं विनिर्ममे ॥६॥ विबुधवर "धर्मकीर्ति" श्रीविद्यानंदप्रमुखमुख्यबुधैः । स्वपरसमयैककुशलैस्तदैव संशोधिता चेयम् ॥७॥ इति स्वोपज्ञकर्म्मग्रंथप्रशस्तौ ।

न च वाच्यं श्रीमद्भिर्देवेन्द्रसूरिभिरेव स्वेषां चित्रावालगच्छवर्त्तित्वं श्रीश्राद्धदिनकृत्यवृत्तौ धर्मरत्नवृत्तौ च कथं प्रतिपादितं?, निभाल्यतां तत्रत्यौ पाठौ "तत्र क्रमेण चित्रावालकगच्छो बभूव भुवि विदितः। श्रीभुवनचन्द्रसूरिस्तत्राभूद्दिव्यपञ्चरविः ॥६॥ तच्छिष्यरत्नमभवद् भुवनप्रसिद्धाश्चारित्तपात्रमखिलश्रुतपारमाप्ताः। गांभीर्यमुख्यगुणरत्नमहासमुद्राः,श्रीदेवभद्रगणिमिश्रसुनामधेयाः॥७॥ तत्पादाम्बुजरोलंबा,निरालंबा वपुष्यपि । अभूवन् भूरिभावाढ्याः,श्रीजगचंद्रसूरयः॥८॥ देवेन्द्रसूरिसंज्ञस्तेषामाद्यो बभूव शिष्यलवः। श्रीविजयचन्द्रसूरिस्तथा द्वितीयो गुणैस्त्वाद्यः॥९॥ चक्रेभ व्यावबोधाय,संप्रदायाऽऽगताऽऽगमात् । सच्छ्राद्धदिनकृत्यस्य,वृत्तिर्देवेन्द्रसूरिभिः॥१०॥ श्रीविजयचंद्रसूरिप्रमुखैर्विद्वद्गुणैर्गुणगरिष्ठैः। स्वपरोपकारनिरतैस्तदैव संशोधिता चेयं॥११॥ प्रथमां प्रतिमप्रतिमप्रतिभाप्रतिहस्तितत्रिदशसूरिः। श्रीहेमकलशनामा सदुपाध्यायो लिलेख्यास्याः॥१२॥ क्रमशश्चैत्रावालकगच्छे कविराजराजि नभसीव । श्रीभुवनचन्द्रसूरिर्गुरुरुदियाय प्रवरतेजाः॥४॥ तस्य विनेयः प्रशमैकमन्दिरं देवभद्रगणिपूज्यः। शुचिसमयकनककनिकषो बभूव भुवि

विदितभूरिगुणः॥५॥ तत्पादपद्मभृङ्गा निस्संगाश्चङ्गतुङ्गसंवेगाः। संजनित द्बोधा जगति जगच्चन्द्रसूरिवराः ॥६॥ तेषामुभौ विनेयौ श्रीमान् देवेन्द्रसूरिरित्याद्यः । श्रीविजयचन्द्रसूरिर्द्वितीयकोऽद्भुतकीर्तिभरः ॥७॥ स्वान्ययोपकाराय, श्रीमद्देवेन्द्रसूरिणा। धर्मरत्नस्य टीकेयं,सुखबोधा विनिर्ममे ॥८॥ प्रथमां प्रतिमप्रतिमं बिभ्राणो गुरुजनेषु भक्तिभरम्। विद्वान् विद्यानंदः सानन्दमना लिलेखा ः ॥९॥ श्रीहेमकलशवाचकपण्डितवरधर्मकीर्तिमुख्यबुधैः । स्वपरसमयैककुशलैस्तदैव संशोधिता चेयम् ॥१०॥ इति। यतोऽत्र न वावदीति यद् श्रीजगच्चन्द्रसूरिवराणां चैत्रावालकगच्छीयश्रीदेवभद्रसूरीणां पार्श्वे यथोपसंपद्ग्रहस्तथा श्रीमतां देवेन्द्रसूरीणां, किंच— श्रीमद्भिर्यदा कर्मग्रन्थवृत्तिः प्रणीता तदा जातैव तपोगच्छोत्पत्तिः,स्पष्टं चैतदुपरिष्टान्निर्दिष्टतत्पाठात्, किंच-श्रीकर्मग्रन्थवृत्तौ श्रीश्राद्धदिनकृत्यवृत्तिं स्पष्टमुल्लिख्य काव्यं तत्रत्यं 'क्ष्माभृद्रंककयोर्मनीषिजडयो'रित्येतत् उल्लिखितं, ततः स्पष्टतरमेतस्यास्तस्याः पश्चाद्भावित्वं, किंच-धर्मरत्नकर्मग्रन्थवृत्तिकरणकाले श्रीधर्मकीर्त्तिपंडितानां साहाय्यं यथा दर्शितं न तथा श्राद्धकृत्यवृत्तौ, तथा च श्राद्धदिनकृत्यधर्मरत्नकर्मग्रन्थवृत्तीनां क्रमेण कृतिः,एवं च कर्मग्रन्थवृत्तावेव तपोगणाचार्यत्वाभिधानात् श्रीजगच्चन्द्रसूरिभ्यः तपोगणोद्भवस्तदानीं निस्संदिग्धः, अन्यच्च-श्रीश्राद्धदिनकृत्यवृत्तिप्रशस्तौ श्रीविद्यानंदो खात् कर्मग्रन्थधर्मरत्नवृत्त्योः श्रीविद्यानन्दधर्मकीर्त्युभयोल्लेखात् श्राद्धदिनकृ वृत्तेः पूर्वतरभाविता, आद्यवृत्त्योः श्रीहेमकलशस्यो खेऽपि अन्त्यायां तदनुल्लेखोऽपि क्रमवत्तां द्योतयति, एवं श्रीमद्देवेन्द्राणां तपागच्छीयत्वे सिद्धेऽपि तपोगणोद्भवस्य त्रयोदशशताब्दीपूर्त्तेरर्वाग्भावे न संदेहो विधेयः, यतः स्तम्भतीर्थीयश्रीशान्तिनाथभांडागारीयपुस्तकेषु स्पष्ट एव तपोगणस्योल्लेखः, दृश्यंतां प्रशस्तिसंग्रहगतास्ताः प्रशस्तयः

श्रीत्रिषष्टीय (तृतीयपर्व) चरित्रं पृष्ट ४७ नं. ५७—१२९५ वर्षे आश्विनवदि २ रवौ अद्येह श्रीबीजापुरपत्तने समस्तराजा-

वलीपूर्वकं तपाकीयश्रीपौषधशालायां चरित्रगुणनिधानसमस्तसिद्धान्तकलोन्मानेन पारगेन तपादेवभद्रगणि- मलयकीर्त्ति-पंडितफुलचन्द्रपंडितदेवकुमारमुनिनेमिकुमारमुनिप्रभृतिसमस्तसाधून् तच्चरणकमलान् भक्तपरमश्रावकसाधू रतनपाल समस्तसिद्धान्तपुस्तकानां पौषधशालाभारनिर्वाहकपरमश्रावक श्रेष्ठी वील्ह द्वितीयभारनिर्वाहक साधर्मिकाणां वात्सल्यतत्पर परमश्रावक उ० आसपाल तृतीयभारनिर्वाहक निरंतरं पुस्तक सिद्धान्तनिर्विकल्पभक्त्या सारतत्पर श्रावक साधु लाहणप्रभृतिभिः समस्तश्रावकैः त्रिषष्ठीयपुस्तकं समस्तसाधूनां श्रावकाणां पठनवाचकश्रेयोऽर्थं लिखापितं लेखकपाठकानां शुभं भवतु ॥ अनेन प्रागेवोत्पत्तिर्तपोऽभिख्यायाः पंचनवत्यग्रद्वादशशताब्द्याः

न च पूर्वोक्तेषु त्रिष्वपि देवेन्द्रसूरीणां सूरित्वेनोल्लेखाच्चतुर्दशशताब्द्यां कृतय एतासां, यतः श्रीमतां षट्त्रिंशदधिकद्वादशसु शतेषु सूरितया स्थितिः, यतः प्रशस्तिसंग्रहे द्वितीये भागे वन्दारुवृत्तिपुष्पिकायां स एव हायनो निर्दिष्टः 'कृतिरियं सुविहितशिरोमणीनां श्रीमद्देवेन्द्रसूरीणामिति रामासौ सूचनात्, दृश्यतां तल्लेखः

श्रीवन्द्रारुवृत्ति भा. २ पृष्ठ १ नं. १—इति षड्विधावश्यकविधिः । एवं ग्रन्थाग्रं २७२० । कृतिरियं सुविहितशिरोमणीनां श्रीमद्देवेन्द्रसूरीणां । रसाक्षिलोचनश्चैव,कलासंपूर्णवर्त्तते (१२३६) ग्रहयोगवियुक्तश्च, मधौ च कृष्णपक्षके ॥१॥ बृहद्गणगणाधीशाः, सूरिश्रीशीलदेवाख्याः। तच्छिष्येणैव लिखितां, भानुप्रभोर्वृत्तिमिमां ॥२॥ प्रवाच्यमानं कृतिभिस्तु नंद्यात् ॥ शुभं भूयात् ।

व्यवहारसूत्रम्, सवृत्ति (द्वितीय खंडः) पृ. ४४ नं. ५०—इति श्रीमलयगिरिविरचितायां व्यवहारटीकायां पंचमोद्देशकः समाप्तः । पंचमोद्देशके ग्रंथाग्रं ९०५ ॥

यरहुडिया साधू० राहड सुत० लाहडेन श्रेयोऽर्थं व्यवहारद्वितीयखंडं लिखापितं संवत् १३०९ वर्षे भाद्रपद सुदि १५ ॥
श्रीदेवभद्रगणिपादसरोरुहालेर्भक्त्या नमद्विजयचन्द्रमुनीश्वरस्य। देवेन्द्रसूरिसुगुरोः पदपद्ममूले,तत्रांतिमौ जगृहतुर्यतितां शिवोत्कौ॥८॥

प्रशस्तिगताः श्रीदेवेन्द्रसूरिसत्का लेखाश्चैते—

श्रीभगवतीसूत्रवृत्तिः पृ. ४६ नं. ५४—ग्रन्थाग्रं १८६१६ । शुभं भवतु । संवत १२९८ वर्षे सुदि १३ सोम, अद्येह बी- जापुरे सा० सहदेव सा० राहडसुत लाहणेन सा० देवचंद्रप्रभृतिकुटुंबसमुदायेन चतुर्विधसंघस्य पठनार्थं वाचनार्थं च लिखापितं । संवत् १२९८ वर्षे फागुन सुदि ३ गुरौ अद्येह बीजापुरे पूज्यश्रीदेवच(वे)न्द्रसूरिश्रीविजयचन्द्रसूरिव्याख्यानतः संसारासारतां विचिन्त्य सर्वज्ञोक्तं शास्त्रं प्रमाणमिति मनसि ज्ञात्वा सा० राहडसुतजिणचन्द्रधणेसरलाहड सा० सहदेव सुत सा० पेढा संघवी गोसलप्रभृतिकुटुंबसमुदायेन चतुर्विधसंघस्य पठनार्थं वाचनार्थं च लिखापितमिति ॥

श्रीउपासकादिसूत्रवृत्तिः पृष्ठ ४७ नं. ५५—संवत् १३०१ वर्षे फाल्गुन वदि १ शनौ अद्येह बीजापुरे पंचांगीसूत्रवृत्तिपुस्तकं ठ० अरसिंहेन लिखितं। उभय ११२८। संवत् १३०१ वर्षे फाल्गुनवदि १३ शनौ, इहैव प्रल्हादनपुरे श्रीनागपुरीयश्रावकैः पौष- धशालायां सिद्धान्तशास्त्रं पूज्यश्रीदेवेन्द्रसूरिश्रीविजयचंद्रसूरिउपाध्यायश्रीदेवभद्रगणेर्व्याख्यानतः संसारासारतां विचिन्त्य सर्वज्ञोक्तं शास्त्रं प्रमाणमिति मनसि विचिन्त्य श्रीनागपुरीयवरहुडीयासंताने सा आसदेव (विशेष श्रीपाक्षिकसूत्रवृत्तिः ता. प्र नं २५ मुजब)

श्रीपाक्षिकचूर्णिवृत्तिः पृष्ठ १९ नं. २५—मंगलं महाश्रीः ॥ पाक्षिकचूर्णिवृत्तिः। ग्रन्थाग्रं ३१०० ॥ संवत् १२९६ विशा- खशुदि ३ गुरौ इहैव बीजापुरे श्रीनागपुरीयश्रावकैः पौशधशालायां सिद्धान्तशास्त्रपूज्यश्रीदेवेन्द्रसूरिव्याख्यानतः संसारासारतां

विचिंत्य सर्वज्ञोक्तं शास्त्रं प्रमाणमिति मनसा विचिंत्य श्रीनागपुरीयवरहुडीयासंताने सा० आसदेव सुत सा नेमड सुत सा राहड सा० जयदेव सा० सहदेव तत्पुत्र सा पेढा सा गोसल सा० राहडसुत जिणचन्दधणेसरवाहडदेवचन्द्रप्रभृतिना चतुर्विध संघस्य पाठनार्थं वाचनार्थं च आत्मश्रेयोऽर्थं लिखापितं ।

श्रीज्ञाताधर्म्मकथाद्यंगवृत्तिः पृष्ठ  नं. ४६—ग्रन्थाग्रं ९००—मंगलं महाश्रीः । संवत् १२९५ वर्षे चैत्र शुदि २ मंगलदिनेऽद्येह श्रीमदनहिल्लपाटके महाराजाधिराजश्रीभीमदेवविजयकल्याणराज्ये ज्ञाताधर्मकथांगप्रभृतिषडंगीसूत्रवृत्तिपुस्तकं लिखितं।

पुरुषार्था इव मूर्त्ताश्चत्वारो नंदनास्तयोर्जाताः । कर्त्तुमिव तुल्यकालं जिनोक्तधर्मं चतुर्भेदम् ॥६॥ प्रथमस्तत्र जयंतो वीराख्यस्तदनु दनु (ज) तिहुणाह्वौ । जाल्हणनामा तुर्यः, पंचत्वं प्राप तत्राद्यः ॥७॥ वीरस्ततोऽन्यदाऽश्रौषीच्छोकशंकुविनाशकम् । श्रीजगचन्द्रसूरीणां, वचः सर्वज्ञभाषितम् ॥ ८ ॥ तद्यथा—चला समृद्धिः क्षणिकं शरीरं, बंधुप्रबंधोऽपि निजार्थबन्धः । भवान्तरे संचलितस्य जंतोर्न कोऽपि धर्मादपरः सहायः ॥९॥ कुबोधरुद्धे भुवने न बुध्यते, स्फुटं जिनेन्द्रागममन्तरेण । कलौ भवेत्सोऽपि न पुस्तकं विना, विधीयते पुस्तकलेखनं ततः ॥१०॥ स्वभ्रातुः श्रेयसेऽलेखि, ततस्तेन सबंधुना । ज्ञाताधर्मकथांगादिषडंगी वृत्तिसंयुता ॥११॥ जंघरालाभिधस्थाने,युगादिजिनमंदिरे । संघस्य पुरतो व्याख्यातैषा देवेन्द्रसूरिभिः॥१२॥ यावत् व्योमसरःक्रोडे, राजहंसौ विराजतः । तावत्कृतिरिषं स्वांतानन्दं नन्दतु पुस्तकं ॥१३॥ सं. १२९७ वर्षे व्याख्यातमिति शुभं भवतु। अतः पंचनवतद्वादशशतेभ्योऽर्वाक् श्रीजगचंद्रसूरीणां स्वर्गतिः

श्राद्धदिनकृत्यवृत्तिः पृष्ठ ४२  नं. ४८—श्रीमज्जगचन्द्रमुनींद्रशिष्यश्रीपूज्यदेवेन्द्रमुनीश्वराणां । तदाद्यशिष्यत्वभृतां च

विद्यानंदाख्यविख्यातमुनिप्रभूणाम् ॥७॥ तथा गुरूणां सुगुणैर्गुरूणां, श्रीधर्मघोषाभिधसूरिराजां। सद्देशनामेवमपापभावं, शुश्राव भावावनतोत्तमांगः ॥ ८ ॥

श्रीनन्द्यध्ययनटीका (मलयगिरीया) पृष्ठं ५१ नं. ८४—संवत् १२९२ वर्षे वैशाख शुदि १३ अद्येह वीजापुरे श्रावकपौषधशालायां श्रीदेवभद्रगणिपं.मलयकीर्त्तिपं.अजितप्रभगणिप्रभृतीनां व्याख्यानतः संसारासारतां विचिंत्य सर्वज्ञोक्तं शास्त्रं प्रमाणमिति मनसि ज्ञात्वा सा० धणपालसुत सा० रतनपाल ठ० गजस्तत् (सुत) ठ० विजयपाल श्रे० दुल्हासुत श्रे० वील्हण महे० जिणदेव महे० वीकलसुत ठ० आसपाल श्रे सोल्हा ठ० सहजासुत ठ० अरसिंह सा० राहडसुत सा० लाहडप्रभृतिसमस्तश्रावकैर्मोक्षफलप्रार्थकैः समस्तचतुर्विधसंघस्य पठनार्थं च समर्पणाय लिखापितं।

श्रीलिंगानुशासनम्, पृष्ठं ५४ नं. ८७—सं० १२८७ वर्षे वैशाख सुदि गुरावद्येह वीजापुरीयश्रावकपौषधशालायां पूज्यश्रीदेवेन्द्रसूरिविजयचंद्रसूरिउपाध्यायश्रीदेवभद्रगणिसद्गुरूणां धर्मोपदेशतः सा० रत्नपाल सा० लाहड श्रे० वील्हण ठ० आसपाल सूत्रपुस्तिका लिखापिता।

व्याकरणटीप्पनकम् पृष्ठं ८५ नं. १४४—सं० १२८८ वर्षे अषाढ वदि अमावास्यादिने भौमे राणकश्रीलावण्यप्रसाददेवराज्ये वटकूपके वेलाकुले प्रतीहारशखा(खा)टप्रतिपत्तौ श्रीमद्देवचंद्रसूरिशिष्येण भुवनचंद्रेण क्षुल्लकधर्म्मकीर्त्तिपाठयोग्या व्याकरणटीप्पनपुस्तिका लिखितेति। पं. सोमकलशेन शोधिता च। यादृशं० मम दोषो न दीयते ॥१॥ शिवतातिरस्तु श्रीजिनशासनस्येति।

श्रीउत्तराध्ययनलघुवृत्तिः पृष्ठं ३८ नं. ४३—तस्याभूत्कइयाभिख्योऽनुजो धरणिगस्तथा। तयोः प्रियतमा लापू, जासलेति

यथाक्रमम् ॥३॥ नारायणस्य संजज्ञे, हंसलेति सधर्म्मिणी। रत्नपालोऽभिधानेन, पुत्रोऽभूद् हृदयप्रियः ॥४॥ जैनधर्मधराधुर्यः, श्रेष्ठी नारायणोऽन्यदा। श्रीमद्देवेन्द्रसूरीणामिति वाक्यामृतं (पपौ) ॥ ५ ॥

उपरिष्टान्निर्दिष्टानां लेखानां तात्पर्येक्षणात् समुन्नीयते एतद्यदुत श्रीमन्तो जगच्चन्द्रसूरयः पञ्चनवत्यधिकद्वादशशतसंवदि वरीवर्त्तमानाः श्रीमन्तो देवभद्राश्च ततः परमपि विद्यमानाः तत्सेवापराश्च श्रीमन्तो देवेन्द्रपादाः, किंच–व्याकरणटीप्पनकपुष्पिकादर्शनात् श्रीमतां धर्मघोषसूरीणां सिद्धहैमाध्येतृत्वं वन्दारुवृत्त्याः लेखेन श्रीतपोगच्छस्य प्राग् वृहद्गच्छीयत्वमासीदिति च, अष्टाशीत्यधिकायां द्वादशशताब्द्यामपि श्रीमद्भिर्भुवनचन्द्रसूरिभिः श्रीधर्मकीर्त्तये टीप्पनकस्य लिखनात् उपसंपदो गच्छाख्यायाश्च परावृत्तावपि नान्यगणीयवत् मूलगणाद्वैमनस्कतेति।

श्रीमतां देवेन्द्रसूरीणां चैत्यवन्दनभाष्यमूलकाराणां वृत्तिकृतां श्रीधर्मघोषसूरीणां च सोमसौभाग्यकाव्यक्रियारत्नसमुच्चयश्रीतपोगच्छपट्टावलीगतमैतिह्यमेवं–ततो गणः शिष्यततेर्वटाख्याख्यातोऽभवत् क्वापि वृहद्गणार्चिः। तस्मिंश्च गच्छे प्रवरेषु भूरिषु, सूरिष्वतीतेषु बहुश्रुतेषु ॥ २३ ॥ श्रीमान् जगच्चन्द्र इति प्रतीतनामा सुधामाऽजनि सूरिराजः। षट्त्रिंशदाचार्यगुणाः गणेन्द्रं, तं शिश्रियुः प्रेमभरप्रणुन्नाः॥२४॥ (युग्मम्) स्वगोभरैर्ध्वस्तसमस्तपापतमाः क्षमादर्शितपुण्यमार्गः। जगज्जनानां प्रमदं वितन्वन्, श्रीचन्द्रवद्योऽजनि सार्थकाह्वः॥२५॥ वैराग्यवान् द्वादशहायनान्याचामाम्लनिर्माणतपो व्यतप्त। यो दुस्तपं तेन तपागणेति, गणस्य सत्ख्यातिरभूत् क्षमायाम् ॥ २६ ॥ श्रीमज्जगच्चन्द्रगुरोर्विनेयस्त्वमेयसद्गेयगुणैर्विनिद्रः। देवेन्द्रमर्त्येन्द्रमुनीन्द्रवंद्यो, देवेन्द्रसूरिः समभूत् प्रमाढ्यः॥२७॥ व्याख्याकलां यस्य कलां विलोक्य, श्रीवस्तुपालादिमहेभ्यसभ्याः। के घूर्णयन्ति स्म न पूर्णचित्ताः, श्री-

र्पाणि हर्षेण च विस्मयेन ॥२८॥ कर्मस्वरूपप्रथनाढ्यकर्मग्रंथादिसद्ग्रंथविधा नवेधाः। मेधाप्रधानो जगतां गतांहा, व्यभासयज्जै-
नमतं मतं यः ॥ २९ ॥ संशुद्धसाधुस्थितिदुर्गमार्गं, प्ररूपयंश्चारु समाचरंश्च। अनल्पसंकल्पितदानकल्पद्रुमोऽभवद्यो जिनकल्पि-
कल्पः ॥३०॥ ख्यातो दिगंते वितते तदंतेवासी स्वदासीकृतदेवसूरिः। निस्सीमगंभीरिमहृद्यविद्यानंदाह्वसूरींद्र इहावभासे ॥३१॥
अनौकहं नव्यलताः श्रिता वा,सरित्पतिं वा सरितस्तता वा। मराललीला इव मानसं वा,यं हृद्यविद्या हि तथा श्रियाढ्याः॥३२॥
प्रह्लादनस्पृक्पुरपत्तने श्रीप्रह्लादनोर्वीपतिसद्विहारे। श्रीगच्छधुर्यैः किल यस्य वर्यश्रीसूरिमंत्रे सति दीयमाने॥३३॥ सत्पात्रमात्रा-
तिगसद्गुणातिप्रहृष्टहृल्लेखभृदग्र्यलेखाः। कर्पूरकाश्मीरजकुंकुमादिगंधोदकं श्राक् ववृपुस्तदानीम् ॥ ३४ ॥ युग्मम् । तत्पट्टपूर्वाद्रिवि-
निद्रभानुर्जगत्रयाह्लादनशीतभानुः। श्रीधर्मघोषः स्फुटदन्तघोषः,स नन्दतान्निर्मितपुण्यपोषः॥३५॥ प्रबोधितो येन नयेन साधुः,
पृथ्वीधरः साधुधुरंधरोऽसौ। स्फारान् विहारांश्चतुरश्चतुर्भिः, समन्विताशीतिमितानकार्षीत् ॥ ३६ ॥ षट्पूर्वपंचाशदतुल्यहेमघटी-
भिरिभ्यो रुचिरेन्द्रमालाम्। कंठे निजे यो विनिवेश्य वश्यां,मुक्तिं वशां तां हृदि मन्यते स्म ॥३७॥ माधुर्यधुर्यां च सुधासदेश्यां,
यद्देशनां श्रोत्रपुटैर्निपीय। पृथ्वीधरांगोद्भवझंझणोऽसौ, श्रीतीर्थयात्रां रचयन् पवित्राम् ॥३८॥ सुवर्णदुर्वर्णमयीं किलैकामेवाद्भुत-
तश्रेणिकरीं पताकाम्। ददौ सदौचित्यधरः सुतीर्थे,शत्रुंजयाद्रावपि चोज्जयंते ॥३९॥ युग्मम्। श्रीधर्मघोषो गुरुरन्यदोर्व्यां, गुर्व्यां
विहारं रचयन् समागात्। श्रीउज्जयिन्यामलकाजयिन्यामनन्यसामान्यघनप्रभावः ॥४०॥ गुरून्नतिं 'लोकततिप्रसूतामतिप्रभूतां पुरि
वीक्ष्य कश्चित्। योगी विपश्चित् कुपितः समागात्, गुर्वाश्रमं संश्रित आप्तशिष्यैः ॥४१॥ सर्पान् सदर्पान् वदनोत्थतारस्फूत्कार-
वारैर्भरितांतरिक्षान्। परःसहस्रान् स मुमोच विद्याकृतानि चान्यान्यपि वक्रितानि ॥४२॥ पद्मासने ध्यानमथ प्रपूर्य, सूर्यग्रणीर्ग-

यगुणोऽनणीयः। विनेयवृन्दैः सह तं बबंध, सक्रौं चबंधं बुधसार्वभौमः॥४३॥ श्रिये श्रियेऽहं सह शिष्यलक्षैर्मां मुंच सद्यः सुगुरो ! प्रसद्य । कारुण्यपुण्यः श्रितसाम्यकाम्यस्त्वं वर्तसेयद् व्रतिनामिनश्च ॥ ४४ ॥ ततो व्यमुंचद् गुरुचक्रवर्ती, तं योगिनं योजितपाणिपद्मम् । ततो मनःसाम्यभृतां नितान्तं, कांतं घृणासांद्ररसैः प्रशस्यैः ॥ ४५ ॥ विद्यापुरे क्षुद्रविनिद्रविद्याविदः सदःसंश्रितचारुपट्टाः । श्राद्धीः प्रदुष्टा हृदि शाकिनीः श्रागस्तंभयद्यश्चतुरश्चतस्रः ॥ ४६ ॥ यः पूर्जनाभ्यर्थनया नयानुसारीव ताः स्तंभनतो मुमोच । आदर्शयद्यस्य च रत्नमेकं, रत्नाकरः स्वं तटसंश्रितस्य ॥४७॥ विनिर्मिता येन च भव्यनव्यग्रंथा अनेके सरसार्थसार्थाः। प्रदीप्रदीपा इव तत्त्वमार्गमद्यापि हृद्याः किल दर्शयन्ति ॥ ४८ ॥ गिरीशगिर्युज्ज्वलतोरुगर्वखर्वीकृतैः पेशलकौशलाढ्याः । सदावदाताः प्रवरावदाताः, वक्तुं न शक्याः कविभिर्यदीयाः ॥ ४९ ॥ पृ. २४

श्रीमत्तपोगणासमानानुपमस्तंभायमानश्रीधर्मसागरमहोपाध्यायप्रणीततपोगच्छपट्टावल्यामपि—श्रीजगचंद्रपट्टे पंचचत्वारिंशत्तमः श्रीदेवेन्द्रसूरिः, स च मालवके उज्जयिन्यां जिनभद्रनाम्नो महेभ्यस्य वीरधवलनाम्नस्तत्सुतस्य पाणिग्रहणनिमित्तं महोत्सवे जायमाने वीरधवलकुमारं प्रतिबोध्य त्रुत्तरत्रयोदशशत १३०२ वर्षे प्राव्राजयत्, तदनु तद्भ्रातरमपि प्रव्राज्य चिरकालं मालवके एव विहृतवान्, ततो गूर्ज्जरधरित्र्यां श्रीदेवेन्द्रसूरयः श्रीस्तंभतीर्थे समायाताः । पृ. ५७

स्तंभतीर्थे च चतुष्पथस्थितकुमारपालविहारे धर्मदेशनायामष्टादशशत १८०० मुखवस्त्रिकाभिर्मंत्रिवस्तुपालः चतुर्वेदादिनिर्णयदातृत्वेन स्वसमयपरसमयविदां श्रीदेवेन्द्रसूरीणां वंदनकदानेन बहुमानं चकार ॥—श्रीगुरवस्तु विजयचन्द्रमुपेक्ष्य विहरमाणाः क्रमेण पाल्हणपुरे समायाताः। तत्र चानेकजनतान्विताः शीकरीयुक्तसुखासनगामिनश्चतुरशीतिरिभ्या धर्मश्रोतारः। प्रह्लादनविहारे

च प्रत्यहं मूटकप्रमाणा अक्षताः, क्रयविक्रयादौ नियतांशग्रहणात् पोडशमणप्रमाणानि पूगीफलानि यायांति, प्रत्यहं पंचशतीवीसलप्रियाणां भोगः ॥ एवं व्यतिकरे सति श्रीसंघेन विज्ञप्ता गुरवः यदुत गणाधिपतिस्थापनेन पूर्यतामस्मन्मनोरथः, गुरुभिस्तु तथाविधमौचित्यं विचार्य प्रल्हादनविहारे वि० त्रयोविंशत्यधिके त्रयोदशशते १३२३ वर्षे क्वचिचतुरधिके १३०४ श्रीविद्यानंदसूरिनाम्ना वीरधवलस्य सूरिपदप्रदानं । तदनुजस्य च भीमसिंहस्य धर्मकीर्तिनाम्नोपाध्यायपदमपि तदानीमेव संभाव्यते ॥ सूरिपददानावसरे सौवर्णकपिशीर्षके प्रह्लादनविहारे मंडपान्तः कुंकुमवृष्टिः, सर्वोऽपि जनो महाविस्मयं प्राप्तः । श्राद्धैश्च महानुत्सवश्चक्रे ॥ तैश्च श्रीविद्यानंदसूरिभिर्विद्यानंदाभिधं व्याकरणं कृतं ॥ यदुक्तम्—विद्यानंदाभिधं येन, कृतं व्याकरणं नवम् । भाति सर्वोत्तमं स्वल्पसूत्रं बह्वर्थसंग्रहं ॥ १ ॥ पश्चात् श्रीविद्यानंदसूरीन् धरित्र्यामाज्ञाप्य पुनरपि श्रीगुरवो मालवके विहृतवंतः । तत्कृताश्च ग्रंथास्त्वेते २–श्राद्धदिनकृत्यसूत्रवृत्ती २–नव्यकर्मग्रन्थपंचकसूत्रवृत्ती २–सिद्धपंचाशिकासूत्रवृत्ती १–धर्मरत्नवृत्तिः २–(१) सुदर्शनाचरित्रं ३ त्रीणि भाष्याणि "सिरिऊसहवद्धमाण" प्रभृतिस्तवादयश्च, केचित्तु श्रावकदिनकृत्यसूत्रमित्याहुः॥ विक्रमात् सप्तविंशत्यधिकत्रयोदशशत १३२७ वर्षे मालवक एव देवेन्द्रसूरयः स्वर्गं जग्मुः ॥ दैवयोगात् विद्यापुरे श्रीविद्यानंदसूरयोऽपि त्रयोदशदिनांतरिताः स्वर्गभाजः। अतः षड्भिर्मासैः सगोत्रिसूरिणा श्रीविद्यानंदसूरिबांधवानां श्रीधर्मकीर्त्युपाध्यायानां श्रीधर्मघोषसूरिरितिनाम्ना सूरिपदं दत्तम् ॥ श्रीगुरुभ्यो विजयचंद्रसूरिपृथग्भवने कं गुरुं सेवेऽहमिति संशयानस्य सौवर्णिकसंग्रामपूर्वजस्य निशि स्वप्ने देवतया श्रीदेन्द्रसूरीणामन्वयो भव्यो भविष्यतीति तमेव सेवस्वेति ज्ञापितम् ॥ श्रीगुरूणां स्वर्गगमनं श्रुत्वा संघाधिपतिना भीमेन द्वादश वर्षाणि धान्यं त्यक्तम् ॥

४६-छायालीसोत्ति श्रीदेवेन्द्रसूरिपट्टे पट्चत्वारिंशत्तमः श्रीधर्मघोषसूरिः, येन मंडपाचले सा० पृथ्वीधरः पंचमव्रते लक्षप्रमाणं परिग्रहं नियमयन् ज्ञानातिशयात्तद्भंगमवगम्य प्रतिपेधितः । स च मंडपाचलाधिपस्य सर्वलोकाभिमतं प्राधान्यं प्राप्तः, ततो धनेन धनदोपमो जातः॥ पश्चात्तेन चतुरशीति ८४ जिनप्रासादाः सप्त च ज्ञानकोशाः कारिताः। श्रीशत्रुञ्जये च एकविंशतिघटीप्रमाणसुवर्णव्ययेन रैमयः श्रीऋषभदेवप्रासादः कारितः, केचिच्च तत्र षट्पंचाशत्सुवर्णघटीव्ययेनैंद्रमालायां (लां यः) परिहितवानिति वदंति ॥तथा धरित्र्यां केनचित्साधर्मिकेण ब्रह्मचारिवेषदानावसरे महर्धिकत्वात् पृथ्वीधरस्यापि तद्वेषः प्राभृतीकृतः, स च तमेव वेषमादाय ततःप्रभृति द्वात्रिंशद्वर्षीयोऽपि ३२ ब्र चार्यभूत् ॥ तस्य च पुत्रः सा० झांझणनामा एक एवासीत् । येन श्रीशत्रुंजयोज्जयंतगिर्योः शिखरे द्वादश १२ योजनप्रमाणः सुवर्णरूप्यमय एक एव ध्वजः समारोपितः । कर्प्पूरकृते राजा सारंगदेवः करयोजनं कारितः ॥ येन च मंडपाचले जीर्णटंकानां द्विसप्तत्या कचित् षट्त्रिंशता सहस्रैर्गुरूणां प्रवेशोत्सवश्चक्रे ॥ देवपत्तने च शिष्याभ्यर्थनया मंत्रमयस्तुतिविधानतो येषां रत्नाकरस्तरंगे रत्नढौकनं चकार। तथा तत्रैव ये स्वध्यानप्रभावात्प्रत्यक्षीभूतनवीनोत्पन्नकपर्दियक्षेण वज्रस्वामिमाहात्म्याच्छत्रुंजयान्निष्काशितं जीर्णकपर्दिराजं मिथ्यात्वमुत्सर्पयंतं प्रतिबोध्य श्रीजैनबिंबाधिष्ठायकं व्यधुरिति ॥ एकदा काभिश्चिद् दुष्टस्त्रीभिः साधूनां विहारिताः कार्मणोपेता वटका भूपीठे यैस्त्याजिताः संतः प्रभाते पाषाणा अभवन्, तदनु चाभिमंत्र्याऽर्पितपट्टकासनास्ताः स्तंभिताः सत्यः कृपया मुक्ता इति। तथा विद्यापुरे पक्षांतरीयतथाविध ीभिर्गुरूणां व्याख्यानरसे मात्सर्यात् स्वरभंगाय कण्ठे केशगुच्छके कृते यैर्विज्ञातस्वरूपास्ताः प्राग्वत्स्तंभिताः संत्योऽतः परं भवद्गणे न वयमुपद्रोष्याम इति वाग्दानपुरःसरं संघाग्रहान्मुक्ता इति ॥

उज्जयिन्यां च योगिभयात् साध्वस्थिते गुरव आगताः, योगिना साधवः प्रोक्ताः–अत्रागतैः स्थिरैः स्थेयं?, साधुभिरुक्तं–स्थिताः सः किं करिष्यसि ?, तेन साधूनां दन्ता दर्शिताः, साधुभिस्तु कफोणिर्दर्शिता, साधुभिर्गत्वा गुरूणां विज्ञप्तं, तेन शालायामुन्दरवृन्दं विकुर्वितं, साधवो भीता गुरुभिर्घटमुखं वस्त्रेणाऽऽच्छाद्य तथा जप्तं यथा राटिं कुर्वन् स योगी आगत्य पादयोर्लग्नः ॥

क्वचन पुरे निश्यभिमंत्रितद्वारदानं, एकदा अनभिमंत्रितद्वारदाने शाकिनीभिः पङ्क्तिरुत्पाटिता स्तंभिता ततो वागुदाने च मुक्ताः॥

यैरेकदा सर्पदंशे रात्रौ विषेणांतरांतरामूर्छामुपगतैरुपायविधुरं संघं प्रत्यूचे। प्राचीनप्रतोल्यां कस्यचित् पुंसो मस्तके काष्ठभारिकामध्ये विषापहारिणी लता समेष्यति सा च प्रघृष्य दंशे देया इत्येवं प्रोक्ते संघेन च तथाविहिते तया प्रगुणीभूय ततः प्रभृति यावज्जीवं षडपि विकृतयस्त्यक्ता आहारस्तु तेषां सदा युगंधर्या एव ॥

तत्कृता ग्रन्थास्त्वेवं–संघाचारभाष्यवृत्तिः, सुअधम्मेतिस्तवः कायस्थिति–भवस्थितिस्तवौ चतुर्विंशतिजिनस्तवाः चतुर्विंशतिः, प्रास्ताशर्मेत्यादि स्तोत्रं देवेन्द्रैरनिशं० इति श्लेषस्तोत्रं यूयं युवां त्वमिति श्लेषस्तुतयः, जय वृषभेत्यादिस्तुत्याद्याः ॥

तत्र जयवृषभेत्यादिस्तुतिकरणव्यतिकरस्त्वेवं–एकेन मंत्रिणाऽष्टयमकं काव्यमुक्त्वा प्रोचे–ईदृक्काव्यमधुना केनापि कर्तुं न शक्यं। गुरुभिरूचे–अनस्तिर्नास्ति। तेनोक्तं–तं कविं दर्शयत। तैरुक्तं–ज्ञास्यते॥ ततो जयवृषभस्तुतयः अष्टयमका एकया निशा निष्पाद्य भित्तिलिखिता दर्शिताः। स च चमत्कृतः प्रतिबोधितश्च ॥ ते च वि०सप्तपंचाशदधिकत्रयोदशशत १३५७ वर्षे दिवं गताः॥ पृ.५७

श्रीक्रियारत्नसमुच्चये–देवेन्द्रकर्णाभरणीभवद्भिर्यशोभिरुद्भासितविष्टपेन। देवेन्द्रदेवेन बभेऽस्य पट्टे, विष्णोर्यथा वक्षसि कौस्तुभेन ॥११२॥ निजाङ्गनोद्गीतयदीयकीर्तिशुश्रूपुरक्षिश्रवसामृमुक्षाः। चक्षुःसहस्रे रसिकः किमाधात्, पट्टे स तस्याजनि धर्मघोषः

॥११३॥ मिथ्य तोत्सर्पणबद्धकक्षं, प्रेक्ष्य क्षितौ जीर्णकपर्दिनं यः। प्रबोध्य वाचा जि ।जबिम्बाधिष्ठायकं पूर्व व व्यधत्त ॥११४॥ शिष्यार्थनानिर्मितसंस्तवस्यानुभावतो देवकपत्तनेऽङ्घ्रिः। भूपस्य श्रुशुरिवास्य रत्नं तरङ्गहतैरुपदीचकार ॥ ११५ ॥ विद्यापुरे योऽखिलशाकिनी मुपद्रवं द्रावयति सूरिः। श्रीहेमचन्द्रो भृगुकच्छसंज्ञे, पुरे य दुर्धरयोगिनीनाम् ॥११६॥ यो योगिनं पुष्पकरण्डनीस्थं, दुर्थेष्टितैर्भापनबद्धकक्षम्। तथाऽव्वनम्रं विदधेऽन्तिमोऽर्हन्निवास्थिक मिकशूलपाणिम् ॥११७॥ यस्योपदेशान् नृपम त्रिपृथ्वीधरश्चतुर्भिः सहितामशीतिम्। ज्ञातीरिवोद्धर्तुमिदं मिताः ।, व्यधापयत्तीर्थकृतां विहारान् ॥११८ ॥ दंशाददहेर्गाहितकाष्ठभारविषौषधीस नुर्दिशान्ते। महात्मवधो विकृतीर्विहाय, वृत्तिं व्यधादेव युगंधरीभिः ॥११९॥ पृ. १३१

वृत्तिकाराणां श्रद्धानिर्मलत्वं द्धान्तज्ञानं साहि रसिकता अत्रा पदमेव प्रतिभापथमेष्यति विलोककानामिति विलोकनाय विदुषोऽभ्यर्थ्य समाप्यत इदमिति अलेख्यानंदसागरेण श्रीसिद्धक्षेत्रे (पालीटाणा) वीरसंवत् २४६४ भाद्रशु द्वितीया।

जैनस्तोत्रसंग्रहे तत्र भवत्कृतानां मुद्रितानां स्तुतीनां सूचिरियं

## श्रीधर्मघोषसूरिकृतानि स्तोत्राणि

## परिशिष्टम् १ उपयुक्ततरस्थानानि

तेनात्र यदेकश्लोकादिकं भगवद्गुणोत्कीर्त्तनपरं चैत्यवंदनायाः पूर्वं भण्यते तत् मंगलवृत्ताऽपरपर्याया नमस्कारा इत्युच्यंते, यद्भाष्ये–उद्दामसरं वेयालिउव्व पढिऊण सुकइबंधाइं । मंगलवित्ताइं तओ पणिवायथयं पढइ संमं॥१॥ति (२३६ अ.) पूर्वभणनीयत्वादेव नमस्काराणां तद्द्वारं पूर्वं सप्तममुक्तं,यत्तु कायोत्सर्गानंतरं भण्यते ततः स्तुतय इति रूढाः,चैत्यवंदनापर्यंते च स्तोत्रमिति, अयमेव चैतेषां परस्परं विशेषः, अन्यथा भगवत्कीर्त्तनरूपतया सर्वेषामप्येषामेकस्वरूपापत्तेः,भणितं चागमे त्रितयमप्येतत् नमस्कारस्तुतिस्तवा इति, तथा चोत्तराध्ययनसूत्रं–थयथुइमंगलेणं भंते! जीवे किं जणयइ?, थयथुइमंगलेणं नाणदंसणचरित्ताणि बोहिलाभं च भणयइ, नाणदंसणचरित्तसंपन्ने णं जीवे अंतकिरियं कप्पविमाणोववत्तियं आराहणं आराहेई (२९ अ०)त्यादि विमर्शनीयमिदं सूक्ष्मधियेति २२ पृ. ३१–३२

निर्व्याजा दयिते ननांदृषु नता श्वश्रूषु नम्रा भवेः, स्निग्धा बंधुषु वत्सला परिजने स्मेरा सपत्नीष्वपि । पत्युर्मित्रजने सनर्मवचना खिन्ना च तद्द्वेषिषु, स्त्रीणां संवननं नतभ्रु!। तदिदं वीतौषधं भर्तृषु ॥ १२४ ॥ पृ. ४३–४४

प्रदक्षिणात्रयानंतरं च देवगृहलेखकपोतकपाषाणादि घटापनकर्म्मकरसारादिकरणेत्यादिजिनविषयव्यापारपरंपराप्रतिषेधरूपां द्वितीयां नैषेधिकीं मध्ये मुखमंडपादौ कृत्वा मूलबिंबसंमुखं प्रणामत्रिकं करोति, पृ. ५३

तां च विशिष्टान्यपूजां सामग्र्यभावे नोत्सारयेत्, भव्यानां तद्दर्शनजन्यपुण्यानुबंधिपुण्यानुबंधस्यांतरायप्रसंगात्, किंतु–तंपि सविसससोहं जह होइ तहा तहा कुज्जा ॥ ४ ॥ पृ. ५३

पुष्पफलपानीयनैवेद्यप्रदीपप्रमुखपदार्थसार्थसमानयनादिरूपो जिनपूजाविषयोऽपि सावद्यव्यापारो देववंदनावसरे न कर्त्तव्य इत्यर्थः ॥ पृ. ५४

उस्सेहमंगुलेणं अह उड्ढमसेस सत्त रयणीओ । तिरिलोए पंचधणुसय सयपडिमा पणिवयामि ॥ २२ ॥

अत्र यथा निर्माल्यापनयनानंतरं प्रथममंगप्रक्षालनं पूजादि च, स्न नंतरं पुनः अंगप्रक्षालनादि विधीयते, स्नानपूर्वं - मा लिप्रक्षेपणाद्यपि च ज्ञेयं पृ. ५८

"पुष्पामिष गोत्रप्रतिपत्तिपूजानां यथोत्तरं प्राधान्य"मिति ॥ अत्रायं भावार्थः-पुष्पैः जात्यादिभिः प्रथमा अंगपूजा भवति । इह पुष्पग्रहणमादिमध्यावसानेषु पुष्पांजलिपुष्पपूजापुष्पप्रकरादिसमये सर्वत्र बहूपयोगि बहुशोभित्वाद्, अन्यथा पत्रफलजलगंधवर भरणाद्यप्यंगपूजाया पयुज्यते, ततश्चात्र पुष्पेत्युपलक्षणं, तेन निर्माल्यापनयनमार्जनांगप्रक्षालनाद्यनंतरं नित्यं विशेषतश्च पर्वसु तु माञ्जलिप्रक्षेपादिपूर्वं धुनीकर्पूरजलादिचंदनकुंकुमादिकल्पितजलप्रभृतिसद्गृहजेतरगंधोदकादिभिः स्नपनं सुरभि मालवस्त्रेणांगलूछनं घनसारकुंकुमादिभिर्विलेपनांग्यादिविधानं गोरोचनामृगमदादिभिरलंकरणं विचित्रवस्त्रैः परिधापनं ग्रंथिमवेष्टिपूरिमसंघातिमविधानचतुर्विधप्रधानाम्लानमाल्यादिभिर्मालाटोडरमुगुटशिरस्कपुष्पगृहादिविरचनं जिनहस्ते नालीकेरबीजपूरपूगीफलनागवल्लीपत्रादिमोचनं धूपोत्क्षेपसुगंधवासप्रक्षेपाद्यपि च सर्वमंगपूजायां भवति पृ. ६२

जह मिम्मियपडिमाणं पूया पुप्फाइएहिं खलु उचिया । पृ. ६३

स्नपनादिभेदानंतरेण यत्पंचादिपूजाभेदानामेवमुपन्यासः तत् पूर्वपूजितादिषु मृन्मयादिबिंबेषु च संध्यादिषु च प्रायः पंच-

*उपयुक्त-स्थानानि*

पूजासद्भावभावितया सर्वदा सर्वोपयोगित्वादिति ज्ञापनार्थं पृ. ६६

प्रत्यन्तरेऽधिकं—तेसु पुरेसु समासु य नमिविनमीहिं फुरंतभत्तीहिं। ठविओ सिरिरिसिहजिणो धरणिंदो नागराया य ॥८१॥ आवश्यकचूर्णिः—'पुरेसु भयवं ऊसभसामी देवयं ठाविउं' 'तं पूयंति तिसंझं झायंति सया अवंझफलमुसहं। अच्छउमत्थं छउमत्थवत्थसुत्थं थुणंतेवं ॥ ८२ ॥ सुइकसिणचउत्थीए उत्तरसाढाहिं जो सुरिंदेहिं। कहिओ मरुदेवीए ओयरिओ भाविति-जयपहू ॥ ८३ ॥ चित्तकसिणट्ठमीए जं जम्मणमज्जणक्खणे सव्वे। सुरसेले भत्तीए ण्हविंसु पूइंसु देविंदा ॥ ८४ ॥ जेण हरि-निहियरज्जाभिसेयविहिणा अहेसि जयपहुणो। इह वसुमई व सुमई सुनयसहाणा सणाहा य ॥८५ ॥ रज्जावसरे चिरधरियनलिणि-पत्ताभिसेयसलिलेहिं। मिहुणेहिं ण्हवणगेहि व जप्पयपउमा य अभिरुइया ॥८६॥ नाणं वरविन्नाणं कलाउ सकला जओ पहुत्तं सा। रज्जं पहुत्तसज्झं पावेसि जणो य सयणो य ॥८७॥ लोयंतिमग्गणा इव नमज्जणा सज्जणा न के हुजा ?। संवच्छरियमवुच्छं किमि-च्छियं जस्स दिंतस्स ॥ ८८ ॥ चित्ताइमट्ठमीए महया महयामि गिण्हिरे जंमि। के के न बुहा विबुहा महिमं महिमंडले कासी ॥८९॥ सो जयउ दुविहमोणो अज्जो अज्जे जणंतुऽणज्जेवि। कइया पुण दच्छामो तं तिजइंदं तिजयभाणुं ॥ ९० ॥ तेण अदेवावि जणा देवाविव दिव्वरिद्धिणो विहिया। होऊ तया य सयाविहु नमो नमो नमिरअमराय ॥९१॥ तत्तो तत्ततवाओ हुत्था सत्थावि अत्थ सुकयत्था। तस्सेव किंकरा मो दासा पेसा य भिच्चा य ॥९२॥ तंमि छउमत्थवत्थे विहरंते महियलं पवित्तंते। वरधम्मकित्ति पत्ता होउ सुभत्ती सया अम्ह ॥ ९३ ॥ इय सत्तविभत्तिविभत्तिभत्तिभत्तीइ संथुओ रिसहो। नियरउ संपइ संपइ सयावि भत्ति गयविभत्तिं ॥ ९४ ॥ पृ. ९५–९६

इओ य–मह निव्वाणनिसाए गोयम ! पालयनिवो अवंतीए। होही पाडलियपहू सो असुअउदाइनिवमरणे ॥७०॥ पालइ-रज्जं सट्ठी पणपण्णसयं नवण्ह नंदाणं। नवमोरीणऽट्ठसयं तीस वरिस पूसमित्तस्स ॥७१॥ बलमित्तभाणुमित्ताण सट्ठी नरवाहणस्स चालीसा। तेर निवगद्दभिल्लो कालयआणीयसग चउरो ॥ ७२ ॥ सुन्नमुणिवेयजुत्ता जिणकाला विक्कमो वरिस सट्ठी। धम्माइच्चो चत्ता भाइल सगवीस नाहडे अट्ठ ॥७३॥ तह धुंधुमार तीसा लहुविक्कमाइच्च वारसय वरिसे। दस बुद्धमित्त अंध्रो हेहयवंसी असी भोओ ॥७४॥ इत्यादि। पृ. १२१

इह साधुः श्रावको वा चैत्यगृहादावेकांते प्रयतः परित्यक्तान्यकर्त्तव्यः सकलसत्त्वानपायिनीं भुवं निरीक्ष्य परमगुरुप्रणीतेन विधिना त्रिः प्रमृज्य च क्षितितलनिहितजानुयुगलः करकमलसत्यापितयोगमुद्रं प्रणिपातदंडकं पठतीति पृ. १३२

अरिहंतचेइआणमित्यादिदंडकपाठेन जिनबिंबादिस्तवनं जिनमुद्रया, इयं च पादाश्रिता, दंडकानामपि स्तवरूपत्वात्, योग-मुद्राऽप्यत्र संगतैव, सा च हस्ताश्रिता, अत उभयोरप्यनयोर्वंदने प्रयोगः। पृ. १३४

तं प्राज्यराज्यकमला कमलीकरोति, तस्मै सदा स्पृहयति त्रिदशासुरश्रीः। तस्येन्दुकाशकुसुमोज्ज्वलपुण्यराशेरद्वैतसौख्य-पदवी न दवीयसी स्यात् ॥६॥ (प्रत्यन्तरे–पंचांगभंगमतिरंगभरं नमेद्यो, निःसंगिनं जिनमनंगजितं समंतात्। स स्यादिह त्रि-जगताऽपि सदा नमस्यस्तं प्राज्यराज्यकमला कलयत्यवश्यम् ॥१॥ दौर्गत्यदुःखतरुखंडमखंडितेन, तस्मै सदा स्पृहयति त्रिदशा-सुरश्रीः। तस्माद् द्रुतं द्रवति रौद्रदरिद्रमुद्रा, तस्य प्रकर्षपदवी न दवीयसी स्यात् ॥ २ ॥

(प्रत्यन्तरे–चिंतइ सीहोऽवरेण किं ? ॥६४॥ जं न रसाइ ठियं मे तह दुलहं लद्धमिण्हि लद्धव्वं। जिणपयवंदणमसमं अहरिय- चिंतामणाइगुणं ॥ ६५ ॥ भणियं च—एक्काऽवि जा समत्था जिणभत्ती दुग्गइं निवारेउं। दुलहाइं लहावेउं आसिद्धिं परंपरसुहाइं ॥ ६६ ॥ पत्र २०१

विस्तरार्थिना नवकारपटलसिद्धचक्रबृहन्नमस्कारफलादीन्यवलोकनीयानि पत्र २१८

वाचनांतराणि त्वर्थसांगत्याभावेन यादृच्छिकान्येवेति मत्वोपेक्षितानि पत्र २१८

(प्रत्यन्तरे त्वियं व्याख्यैवं–एवं साक्षात्समासन्नभावाचार्यसद्भावे क्षमाश्रमणपूर्वं जिनबिम्बाद्यन्यथाऽऽपृच्छ्य ईर्यापथिकी प्रतिक्रमणीया, न तु तद्विनाऽपि, पत्र २६१–२६२

इदानीमपि येऽनासादितभावाऽर्हत्पदा वर्त्तन्ते, छद्मस्था इत्यर्थः

प्रभूतदेवगृहादौ वा अधिकाऽपि ( चैत्यवन्दना ) पत्र २३६

इति श्रीसंघाचारभाष्यापराभिधानसंघाचारविधेरुपन्यासः।

तपोगच्छधुरन्धरश्रीदेवेन्द्रसूरिसूत्रितं चैत्यवन्दनभाष्यं

श्री मदन्तेवासिश्रीधर्मघोषसूरिसूत्रितविवरणवृतम्

# श्रीसङ्घाचारभाष्यम्

(संघाचारटीका)

देवेन्द्रवृन्दस्तुतपादपद्मः, स्वर्भूर्भुवः ीवरकेलिसद्म ।
संदेहसंदोहरजःसमीरः, वः शिवायास्तु जिनेन्द्रवीरः ॥१॥
चैत्य निवंदनप्रभृतिभाष्यविवृतेर्यथाश्रुतं िचित् ।
सङ्घस्याचारविधिं वक्ष्ये परोपकाराय ॥२॥

इह हि दुरन्तानंतचतुरंतासारविसारिसं रापारप वारे निमज्जता भव्यजन्तुना जिनप्रवचनप्रतीतचोल्लकादिदशनिदर्शनदुष्प्रापां कथमपि प्रशस्तसमस्तमनुजजन्मादिसामग्रीमवाप्य भवजलधिसमुत्तरणप्रवणप्रवहणसधर्म्मसद्धर्म्मविधाने प्रयत्नो विधेयः, यदवादि—

"भवकोटीदुष्प्रापामवाप्य नृभवादिसकलसामग्रीम् । भव धियानपात्रे धर्म्मे यत्नः सदा कार्यः ॥ १ ॥"

तत्रापि विशेषतः परोपकारकरणे प्रवर्तितव्यं, तस्यैवान्वयव्यतिरेकाभ्यामपि पुण्यबंधनिबंधनत्वात्, उक्तं च—

"संक्षेपात् कथ्यते धर्मो, जनाः! किं विस्तरेण वः? । परोपकारः पुण्याय, पापाय परपीडनम् ॥ १ ॥"

स चोपकारो द्वेधा—द्रव्यतो भावतश्च, तत्र द्रव्योपकारो भोजनशयनाच्छादनप्रदानादिलक्षणः, स चाल्पीयाननात्यंतिकश्च, ऐहिकार्थस्यापि साधने नैकांतेन साधीयानिति, भावोपकारस्त्वध्यापनश्रावणादिस्वरूपो गरीयान् आत्यंतिक उभयलोकसुखावहश्चेत्यतो भावोपकार एव यतितव्यं, स च परमार्थतः पारमेश्वरप्रवचनवचनोपदेश एव, तस्यैव भवशतोपचितदुःखलक्षक्षयक्षमत्वात्, आह च—

"नोपकारो जगत्यस्मिंस्तादृशो विद्यते क्वचित् । यादृशी दुःखविच्छेदाद्देहिनां धर्म्मदेशना ॥ ३ ॥"

स चोपदेशो यद्यपि उपदेष्टव्यभेदादनेकविधः तथापि चैत्यवंदनादिविषयः संघस्याचारविधिरेव प्रथमत उपदेश्यः, तस्यैवाहर्निशमवश्यानुष्ठेयतया प्रतिदिनक्रियत्वेनानुसमयोपयोगित्वात्, तथा च महानिशीथसप्तमाध्ययनसूत्रं—"से भयवं! किं तं पइदिणकिरियं?, पइदिणकिरियं गोयमा! जण्णं अणुसमयं अहन्निसं पाणोवरमं जाव अणुट्ठेयव्वाणि संखिज्जाणि आवस्सगाणि, से भयवं! कयरे ते आवस्सगे?, गोयमा! चिइवंदणादओ" इत्याद्यागमाद् विनिश्चित्य बहुविस्तरातिगंभीरपूर्वभाष्यचूर्ण्यादिग्रंथोक्तप्रतिदिनावश्यकृत्यचैत्यवंदनाद्याचारविधिस्वरूपावगमविधिनिर्णयासमर्थान् दुष्षमादोपादच्यंतं तथाविधायुर्मेधादिबलसामग्रीविकला-

निर्दपुर्णानलोकानवलोक्य तदनुग्रहकाम्यया संक्षिप्तनरं सुखावबोधं आचारविधिनामकं शास्त्रं कर्तुकामः शास्त्रकारः आदावेव समस्तप्रत्यूहव्यूहव्यपोहाय शिष्टसमयपरिपालनाय चाभीष्टदेवतास्तुतिरूपमत्यंताव्यभिचारि मंगलं श्रोतृजनप्रवृत्त्यर्थमभिधेयं प्रयोजनादि च प्रतिपिपादयिषुरिमां भाष्यगाथामाह-

**वंदित्तु वंदणिज्जे सव्वे चिइवंदणाइसुवियारं । बहुवित्तिभासचुण्णीसुयाणुसारेण वुच्छामि ॥ १ ॥**

वंदित्वा वंदनीयान् सार्वान्-सर्वज्ञान् सर्वान् वा समस्तान् चैत्यवंदनादिसुविचारं बहुवृत्तिभाष्यचूर्णिश्रुतानुसारेण वक्ष्यामीति पदसंस्कारः। तथा इह माधिकाद्यपदे मंगलं, द्वितीयेऽभिधेयप्रयोजने, उत्तरार्धे सम्बन्धश्च ज्ञातव्यः पदार्थः पुनरयं:-'वंदित्वे'त्यत्र "वदुङ् स्तुत्यभिवादनयो'रित्यर्थद्वयाभिधायी धातुः,तत्र स्तुतिः गुणोत्कीर्तनं अभिवादनं-कायेन प्रणिपातः, ततश्चायमर्थः-वंदित्वा-वचनेन स्तुत्वा कायेन च प्रणम्य, अनयोश्च प्रायः संज्ञिनां मनःपूर्विकैव प्रवृत्तिरिति मनसोऽप्याक्षेपः,ततश्च मनसाऽपि, प्रणिधाय चेत्यर्थः, एतेन च करणत्रयनमस्काररूपभाववंदनेन वंदित्वा इत्यावेदितं भवति, न पुनः मनःप्रणिधानविधुरतया वीरकादिवद् द्रव्यवंदनेन, तस्याकिंचित्करत्वेनाविकलसकलफलाकलनविकलत्वात्, कान् वंदित्वेत्याह-'सार्वान्' सर्वमतीतानागतवर्तमानकालभाविभावनिकुरंबं सकललोकालोकलक्षणलक्ष्यावलोकनकुशलविमलकेवलज्ञानावलोकबलेन करतलकलितनिर्मलामलकफलवत् समस्तभूतभवद्भाविगुणपर्यायैर्विंदंति सार्वाः, सर्वज्ञा इत्यर्थः, यद्वा सर्वेभ्यो-जीवाजीवादिपदार्थसार्थेभ्यो यथावस्थितानिश्चयस्वरूपनिरूपणरक्षणादिना प्रकारेण हिताः सार्वाः-तीर्थकृतः तान्, किंविशिष्टानित्याह-'वंदनीयान्' स्तूयंते अभिवाद्यंते च भक्तिभरनिर्भरांतःकरणैः सुरासुरनरनायकगणैर्ये ते वंदनीयास्तान्, त्रिभुवनजनतानमस्यानित्यर्थः। एवं निखिलसुरसमूहशिरः-

शिखरभूतानां निःशेषातिशेषविभूषितानां भगवतां तीर्थकृतां सर्वस्वपरसंपत्संहतिसर्वस्वदेश्याः चत्वारोऽतिशयाः संसूचिताः, तथाहि—सर्वं विदंतीति सार्वा इति व्याख्यानेन भगवतां त्रिकालवेदिनां ज्ञानातिशयः समुपलक्ष्यते, न हि निखिलाकलितभावकलापोपकलनकुशलविमलकेवलालोकविकलतया सर्ववेदित्वं सिद्धिसौधमध्यमध्यास्ते १॥ अनेनैव च श्री वीतरागाणामपायापगमातिशयोऽपि प्रतिपाद्यते, तदविनाभावित्वात् केवलभावस्य, तथाहि—सर्वापायभूता हि रागादयः, अविषह्यशारीरमानसाद्यनेकदुःखलक्षोपनिपातहेतुत्वात्, ततश्च न यावद् रागद्वेषादिदोषापादननिदानभूतघनघातिकर्म्मचतुष्कात्यंतापगमस्तावन्न केवलं, न च तावत् सर्ववित्ता युक्तिघटाकोटिमाटीकते इत्यपायापगमातिशयाविनाभावी ज्ञानातिशय इति २॥ सर्वेभ्यो हिताः इत्यनेन तु तेषां स्या द्वादिनां वचनातिशयः स्पष्टं निष्टंक्यते, न खल्वेककालानेकलोकशंसयसंदेहापोहसमर्थसमस्तनयस्तोमाभिमतसर्वसत्त्वस्वस्वभाषापरिणाम्यतिशायिवचनविशेषमंतरेण सर्वथा सर्वेभ्यः सर्वदोपकर्तुं शक्यते इति ३॥ वंदनीयानित्यनेन तु पूजातिशयः श्रीमदर्हतां सुप्रतीत एव, प्रशस्तसमस्तजगज्जंतुजातचित्तचमत्कारिपुरंदरादिसुंदरसुरनिकरविरचितप्रकृष्ट महाप्रातिहार्यादिप्रकारपूजोपचारस्य त्रिभुवनविभूनामहर्निशमवश्यंभावित्वादिति ४॥ एते चत्वारोऽपि देहसौगन्ध्यादीनामतिशयानामुपलक्षणं, तानंतरेणैषामसंभवात्, चतुस्त्रिंशदतिशयोपेतान् सर्वज्ञान् वंदित्वेति तात्पर्यार्थः, यद्वा वंदनीयानिति विशेष्यपदं, तत्र वंदनं—नमनस्तवनानुचिंतनादिप्रशस्तकायवाङ्मनोव्यापाररूपां प्रतिपत्तिमर्हन्तीति वंदनीयाः 'शक्तार्हे कृत्याश्च'(हैम—५—४—३५)त्यर्हार्थेऽनीयः, ते चार्हत्सिद्धाचार्योपाध्यायसर्वसाधवः, अर्हंति चैते मुक्तिमार्गोपदेशप्रदाना१ विघ्नणाशबुद्धिजनन२पंचाचारपरिपालन३विनयविनयन ४ सहायकरणादि५ कारणैर्वन्दनां, यदागमः—

"मग्गे१ अविप्पणासोर आयारे३ विणयया४ सहायत्तं ५। पंचविहनमुक्कारं करेमि एएहिं हेउहिं ॥१॥"ति

भवंति हि प्रौढविशेषणादनुक्तेऽपि विशेष्ये विशेष्यप्रतिपत्तयः,यथा—'ध्यानैकतानमनसो विगतप्रचाराः, पश्यंति यं किमपि निर्मलमद्वितीय'मित्यत्र ध्यानैकतानमनस इत्यनेन योगिनः किमपि निर्मलमद्वितीयमित्यनेन तु परमात्मा च प्रतीयत इति, तान् कियत इत्याह—'सर्वान्' निःशेषान्, समस्तक्षेत्रकालत्रयवर्तिनः पंचापि परमेष्ठिन इत्यर्थः, अथवा वंदनीयान् सिद्धिबुद्धिसमाधिविधानादिनिबंधनप्रत्यलतया प्रणिधानादियोग्यानर्हत्सिद्धसाधुधर्मरूपान् चतुरः पंचमांश्च सम्यग्दृष्टिदेवतादीन् 'चउ वंदणिज्ज जिणमुणिसुयसिद्धा इह सुरा य सरणिज्जा' इत्यत्रैवाधिकारितयाऽभिधास्यमानान् वंदित्वा, श्रुतोदितविधिक्रमेण स्मरणादिगोचरीकृत्य इत्यर्थः। तदेतावता निर्विघ्नशास्त्रपारगमनार्थं शिष्यप्रशिष्यपरंपरया च तत्प्रतिष्ठार्थं मंगलमुक्तं, अर्हदादिप्रणामस्य सकलाकुशलजालसमूलोन्मूलकत्वेन भावमंगलत्वात्, यदभाणि भगवत्यां श्रीविवाहप्रज्ञप्त्यां—"एष पंचनमस्कारः, सर्वपापप्रणाशनः। मंगलानां च सर्वेषां, प्रथमं भवति मंगलम् ॥१॥" तथा महानिशीथेऽपि—'तस्स णं सयलसुक्खहेउसंचयस्स न इट्ठदेवयानमुक्कारविरहिए केई पारं गच्छेज्जा, इट्ठदेवयाणं च नमुक्कारो गोयमा! पंचमंगलमेव, नो णमन्नं'ति,तच्चैवं—नमो अरिहंताणं जाव पढमं हवइ मंगल'मिति। तथाऽन्यत्रापि 'अर्हंतो मंगलं सिद्धा, मंगलं सर्वसाधवः। मंगलं केवलिप्रोक्तो, धम्मो मे मंगलं सदा ॥२॥" तथा—'मम मंगलमरिहंता सिद्धा साहू सुयं च धम्मो य। सम्मद्दिट्ठी देवा दिंतु समाहिं च बोहिं च ॥१॥' भवंति च श्रीविजयनृपतेरिवार्हद्वंदनादिना मंगलानि, तत्कथा चैवम्—

वित्तो मसुदवलओ सुवेइओ सुविजओ सुवासहरो। सुनओ सुवाहिणीओ जंबुद्दीवुऽत्थि सुनिवुव्व ॥ १ ॥ तत्थत्थि सुमडसित्तं व

धर्मरुचिककथा त्विगम्—नयरी नयरीइवरा चंपा नामेण अत्थि जत्थ जणो। नेव कमलोवयारी रविव्व कमलोवयारीवि ॥ १ ॥ तत्थ य चउदसविज्जाठाणाणं पारगा सुबहुवत्ता। अन्नोन्नसिणेहल्ला संति तओ भायरो विप्पा ॥ २ ॥ सोमो य सोमदत्तो य सोमभूई य वल्लहा तेसिं। नागसिरी भूयसिरी जक्खसिरी नामओ कमसो ॥३॥ अह एगत्थ ठियाणं उल्लावो आसि तेसि जह अम्हं। पूज्जइ धणं पगामंपि दाउमासत्तमकुलाओ ॥ ४ ॥ ता अन्नोन्नगिहेसुं वारंवारेण परियणेण समं। विलसंतभुंजयंतेण जुज्जए चिट्ठिउं नूणं ॥५॥ इय पडिवज्जिय सव्वे कल्लाकल्लं मिहो गिहेसुं तो। असणाई भुंजंतो सुहेण वोलिंति बहुकालं ॥ ६ ॥ भोयणवारे जाए अहऽन्नया माहणी य नागसिरी। विउलं असणाईयं अइसंरंभेण रंधेइ ॥७॥ तह एगं सुमहंतं सारइयं कडुयतित्तयं तुंबं। कप्पूरे-लाइजुयं विहेइ बहुनेहओगाढं ॥८॥ अह तस्स बिंदुमेगं जा आसाएइ करयले काउं। खारमखज्जमभुज्जं विसभूयं जाणए ता सा ॥९॥ चिंतेइ अहुण्णाए धिरत्थु मज्झं अनाणमूढाए। जीइ मए बहुनेहदव्वखएणं इमं विहियं ॥ १० ॥ जइ जाणिस्संति इमं ता खिंसि-स्संति जाउयाओ मम। इय चिंतिय सा गोवइ तुरियं तुंबं तमेगंते ॥११॥ अन्नं महुरालावुं उवक्खडेई झत्ति सा तओ विप्पा। तं भुंजु भज्जजुया नियनियकज्जुज्जुया जाया ॥१२॥ बहुसाहुसंजुया पुव्वधारिणो धम्मघोसआयरिया। अह तत्थ समोसरिया सुभूमि-भागंमि उज्जाणे ॥१३॥ तस्सीसो गुरुभत्तो धम्मरुई समिइगुत्तिसुपवित्तो। खंतो दंतो संतो उवसंतो रोसपरिचत्तो ॥१४॥ निम्म-मनिरहंकारो अमच्छरो असमरो असंमोहो। अनियाणो सुहझाणो वासीचंदणसमाणमणा ॥ १५ ॥ मासखमणपारणए कुलाइं सो उच्चनीयमज्झाइं। अडमाणो नागसिरीगिहं पविट्ठो उ भिक्खट्ठं ॥ १६॥ तं दट्ठुं पाविट्ठा सा तुट्ठा सुट्ठु धम्मपब्भट्ठा। उड्डेऊणं तुंबं देइ तयं तस्स सव्वंपि ॥१७॥ आगंतु धम्मरुई पडिदंसइ जा गुरूण ता तेहिं। गंधेण तयं नाउं विसभूयं तो इमं भणिओ

॥ १८ ॥ वच्छ! परिट्ठावसु इमं भुंज गिण्हित्तुमन्नमाहारं। मा पुण इमंमि भुत्ते मरणम लंमि विहिसि ॥ १९ ॥ तो गंतु थंडिले सो तस्स लवं खिवइ जाव ता सहसा। बहुकीडियासहस्सा स गया नेहगंधेण ॥२०॥ जा जा उ तयं भक्खेइ तक्खणे गच्छइ खयं सा। तं पासित्ता चिंतइ धम्मरुई सुद्धधम्मरुई ॥२१॥ एगलवेणवि एयस्स जंति जइ जंतुणो मरणमेव। सव्वंमि परिट्ठविए हा कइसेए भविस्संति ? ॥२२॥ ता इमिणाऽऽहारेणं वरं विणस्सउ ममं चिय सरीरं। विद्धंसणधम्ममिणं पुव्वं पच्छा व जं हेयं॥२३॥ किंच—कृमयो भस्म वि वा,नि यस्येयमीदृशी। कायः परपीडाभिः,पाल्यते ननु को नयः? ॥२४॥ तथा—निरर्थका ये चपलस्वभावा, यास्यंत्यवश्यं स्वयमेव ना म्। त एव यांति क्रिययोपयोगं, प्राणाः परार्थे यदि किं न लब्धं? ॥२५॥ अपिच—इक्कंचिय इत्थ वयं निदिट्ठं जिणवरेहिं सव्वेहिं। तिविहेण पाणिरक्खणमवसेसा तस्स रक्खट्ठा ॥२६॥ इय चिंतित्ता स समत्तसत्तसंताणरक्खणासत्तो। यजीवियनिरविक्खो भक्खेइ तयं महासत्तो ॥२७॥ जओ—नियपाणे परपाणेहिं पाणिणो पालयंति सव्वेऽवि। परपाणे नियपाणेहिं कोइ विरलुच्चिय जियंति॥२८॥ खणमित्तेणं तेणं परिणममाणेण वेयणा विउला। विहिया तस्स सरीरे तिव्वा कडुआ दुरहियासा॥२९॥ तए णं से धम्मरुई अणगारे अथमे अबले अविरिए अपुरिसकारपरकमे अधारणिज्जमितिकट्टु आयारभंडगं एगंते ठवेइ, एगंते ठवेत्ता थंडिल्लं पडिलेहेइ, थंडिलं पडिलेहित्ता दब्भसंथारगं संथरेइ, दब्भसंथारगं संथरेत्ता दब्भसंथारगं दूरुहइ, दब्भसंथारगं दूरुहित्ता पुरच्छाभिमुहे संपलियंकनिसन्ने करयलपरिग्गहियं सिरसावत्तं दसनहं मत्थए अंजलिं कट्टु एवं वयासी—नमोत्थुणं अरिहंताणं जाव संपत्ताणं, नमोत्थु णं धम्मघोसाणं थेराणं मम धम्मायरियाणं धम्मोवएसयाणं, पुव्विंपि य णं मए धम्मघोसाणं थेराणं अंतियं सव्वं पाणाइ-

वाए पच्चक्खाए जावज्जीवाए जाव परिग्गहो, इयाणिंपिय णं तेसिं चेव भगवंताणं अंतियं सव्वं पाणाइवायं पच्चक्खामि जावजीवाए सव्वं मुसावायं० सव्वं अदिन्नादाणं० सव्वं मेहुणं० सव्वं परिग्गहं० सव्वं कोहं माणं मायं लोहं पिज्जं दोसं कलहं अब्भक्खाणं पेशुन्नं अरइरइं परपरिवायं मायामोसं मिच्छादंसणसल्लं पच्चक्खामि जावज्जीवाए, सव्वं असणं सव्वं पाणं सव्वं खाइमं सव्वं साइमं चउव्विहंपि आहारं पच्चक्खामि जावज्जीवाए, जंपिय इमं सरीरं इट्ठं १ पियं २ कंतं ३ मणुन्नं४ मणामं५ नामधिज्जं ६ वेसासियं७ संमयं ८ बहुमयं९ अणुमयं१० भंडकरंडगसमाणं रयणकरंडगभूयं उवहिन्व सुरक्खियं मा णं सीयं मा णं उण्हं मा णं खुहा मा णं पिवासा मा णं वाला मा णं चोरा मा णं दंसा मा णं मसगा मा णं वाइयपित्तियसिंभियसन्निवाइया विविहा रोगायंकपरीसहोवसग्गा फुसंतुत्तिकट्टु,एयंपि णं चरमेहिं ऊसासनीसासेहिं वोसिरामित्तिकट्टु आलोइयपडिकंते कालगए । अह चिरगउत्ति गुरुणा सुद्धिकए तस्स पेसिया समणा । तं कालगयं नाउं आगम्म कहंति ते गुरुणो ॥३०॥ पुव्वगए उवओगं दाउं मेलिय तओ समणसंघं । तं वुत्तंतं कहिउं कहंति गुरुणो गइं तस्स ॥३१॥ अज्जो ! इमो महप्पा अममत्तो सत्तुमित्तसमचित्तो । परपरिवायविरत्तो अवगयतत्तो महासत्तो ॥ ३२ ॥ जिणवयणे अणुरत्तो दइक्करसिओत्ति मरिय धम्मरुई । उववन्नो सव्वट्ठे महाविदेहे सिवं गमिही ॥३३॥ अन्नोवि कोवि एवं मा पुणरवि काहिहित्ति मुणिवसहा ! । तो गंतु नयरि मज्झे जंपंतु इमं जणसमक्खं ॥३४॥ हा हा हहा अकज्जं नागसिरीमाहणीइ इह विहियं । कडुतुंबदाणओ जं विणासिओ एरिसो सो मुणी ॥३५॥ तए णं ते माहणा चंपाए नयरीए बहुजणस्स अंतिए एयमट्ठं सुच्चा निसम्म आसुरुत्ता रुट्ठा कुविया चंडक्किया मिसिमिसेमाणा जेणेव नागसिरिमाहणी तेणेव उवागच्छंति, उवागच्छित्ता नागसिरिं माहणिं एवं वयासी—हं भो नागसिरि ! अपत्थियपत्थिए दुरंतपंतलक्खणे हीणपुन्नचाउद्दसीए

सिरिहिरीधिइपरिवज्जिए धिरत्थु णं तव अहन्नाए अपुन्नाए दूहगाए दूहगनिंबोलियाए जीए णं तुमे तहारूवे साहुरूवे मासखमणपारणगंसि सालइएणं जाव ववरोविए' ता मरसु दुकुलीणे ! निस्सर गेहाउ चयसु वत्थाइ । पाविहिसि इमस्स फलं निहणंति तहा चवेडाहिं ॥३६॥ एवं अक्कोसित्ता उद्धंसित्ता तहा निमच्छित्ता । निच्छोडिय तज्जिय ताडिऊण कड्ढंति तं सगिहा ॥ ३७ ॥ सिंघाडगतिगचउक्कगचच्चरचउमुहमहापहाईसु । हिंडइ सा अलहंती कत्थइ ठाणं व निलयं वा ॥३८॥ तथा—हीलिज्जंती जणाइएहिं निंदिज्जमाण तह मणसा । खिंसिज्जंति परोक्खं गरिहज्जंती तह समक्खं ॥ ३९ ॥ तज्जिज्जंती तह अंगुलीहिं दंडाइएहिं हम्मंती । धिद्धिक्कारिज्जंती नागरनरनारिनियरेहिं ॥४१॥ फुट्टहडाहडसीसा रिंछिव्व अतुच्छमच्छियच्छन्ना । दंडियखंडनिवसणा मल्लगखंडगघडगहत्था ॥४२॥ तो गेहंगेहेणं हेउं भिक्खाइ हिंडमाणी सा । नरइव्व इहेव भवे तिक्खं दुक्खं समणुपत्ता ॥ ४२ ॥ इय तीए सारीरियमाणसदुहसायरे निवुड्डाए । दड्ढोवरिपिडगसमा सोलस रोगा समुब्भूया ॥४३॥ स्वासे १ सासे २ जरे ३ दाहे ४, कुच्छिसूले ५ भगंदरे ६ । अवस ७ अजीरए ८ दिट्ठी ९, अच्छिसूले १० अरोयणे ११ ॥४४॥ कंडू १२ जलोयरे १३ सीसवेयणा १४ कन्नवेयणा १५ कुट्ठे १६ । इय आमयभीएहिँ व पाणेहिँ कहवि सा मुक्का ॥ ४५ ॥ अट्टदुहट्टवसट्टा मरिउं छट्ठीइ नरयपुढवीए । उववण्णा नागसिरी बावीसंसागराउ ठिई ॥ ४६ ॥ तत्थ सहित्ता अइदुस्सहं दुहं तो झसेसु उप्पन्ना । सत्थहया अह मरिउं सत्तमनिरयंमि उववन्ना ॥ ४७ ॥ तित्तीससागराइं सहिय दुहं तत्थ पुण झसो जाओ । पुण सत्तमनेरइओ पुण मच्छो तयणु छट्ठीए ॥ ४८ ॥ दुक्खुत्तो दुक्खुत्तो दुक्खत्ता सा समत्तनरएसु । भमिया जह गोसालो अणंतकालं भवारण्णे ॥ ४९ ॥ सव्वत्थ सत्थवज्झा दाहुप्पत्तीइ सा उ मरमाणा । भमिया दीहद्धं चाउरंतसंसारकान्तारं ॥५०॥ एत्तो कहवि लहियसुकुमालिभवं कयनिया-

णजुत्ततवा । पाविअदेवभवा सा इय जाया दोवई कुमरी ॥५१॥ अह सा इह चंपाए सागरदत्तप्पियाइ भद्दाए । सुकुमालियत्ति जाया दिव्ववसा कहवि अइदुहगा ॥ ५२ ॥ घरजामाउअविहिणा जिणदत्तसुएण सागरेण इमा । परिणिय चइया जलणाइअहिय- हत्थाइफासाओ ॥ ५३ ॥ ससुरउवलद्धपिउणा भणिओ किमदोसपइवया मुक्का ? । नवरि मरामि न तं पुण गच्छंति विणिच्छए मुक्को ॥५४॥ पुण दमगस्सुवणीआ तप्फासं सोऽवि सहिउमचयंतो । सुत्तं मुत्तुं नियखंडघडवसणाइं स गहिय गओ ॥५५॥ पुव्व- कयदुक्कयफलं इअ वच्छे ! मुणिय मा विसूरेसु । इय पिउविबोहिया सा महाणसे देइ दाणाइं ॥ ५६ ॥ भिक्खागयसमणीओ कयाइ तं कुंटलाइं पुच्छंतिं । गोवालियापवत्तिणी गाहइ गिहिधम्मजइधम्मं ॥ ५७ ॥ समणीणुवस्सयंतो कप्पइ समतलपयाव- णाइत्ति । भणियाविहु उस्सग्गाइ कुणइ पुण बाहिरुज्जाणे ॥ ५८ ॥ अह दट्ठु देवदत्तं सिवियत्थं सायरं पणनरेहिं । लालिज्जंतिं चिंतइ लायन्नमहो अहो सुभगा ॥ ५९ ॥ निब्भग्गाऽहमिगस्सवि आसि अणिट्ठात्ति हुज्ज ताऽहंपि । छट्ठट्ठमाइणाऽणेण निच्चमिय कुणइ दुनियाणं ॥ ६० ॥ हत्थाइधोविरा न हु जुज्जइ इय गुत्तबंभयारीणं । पुण पुण भणिज्जमाणी गुरुणीहिँ ठिया पुढो निलए ॥ ६१ ॥ सच्छंदचिट्ठिआ अद्धमासभत्तेण मरिय सा जाया । नवपलिआऊ देवी अपरिग्गहिआ विइअकप्पे ॥ ६२ ॥ चविउं कंपिल्लपुरंमि दुवयचुलणीण दोवई जाया । पणपंडवे वरइ सा सयंवरे वंदिय जिणित्ति ॥६३॥ अत्र षष्ठांगसूत्रं—"तए णं सा दोवई रायवरकन्ना जेणेव मज्जणघरे तेणेव उवागच्छइ, तेणेव उवागच्छित्ता जिणघरं अणुपविसइ, जिणघरं अणुपविसित्ता जि- णपडिमाणं आलोए पणामं करेइ, पणामं करेत्ता लोमहत्थयं परामुसइ, परामुसित्ता एवं जहा सूरियाभे जिणपडिमाओ अच्चइ तहेव भाणियव्वं जाव धूवं डहइ, वामं जाणुं अंचेइ, करयलजाव कट्टु एवं वयासी—नमोत्थुणं जाव संपत्ताणं, वंदइ नमंसइ,

जिणधराओ पडिनिक्खमइ'' अत्र जीवाभिगमलघुविवरणोक्ता व्याख्या—ततो विधिना प्रणं ' कुर्वन् प्रणिपातदंडकं पठति, तद्यथा—नमोत्थुणं अरिहंताणमित्यादि यावन्नमो जिणाणं जिअभयाणंति, दंडकार्थश्चैत्यवंदनविवरणादवसेयः, 'वंदइ नमंसइ'त्ति वंदते ताः प्रतिमाश्चैत्यवंदनविधिना प्रसिद्धेन, नमस्करोति पश्चात् प्रणिधानादियोगेनेत्येके, अन्ये तु विरतिमतामेव प्रसिद्धश्चैत्यवंदनविधिः, अन्येषां तु तथाऽभ्युपगमपुरस्सरकायव्युत्सर्गासिद्धिरिति वंदते सामान्येन, नमस्करोति आशयवृद्धेर्व्युत्थाननमस्कारेणेति, तत्त्वमत्र भगवंतः परमर्षयः केवलिनो विदंती''ति ॥ जह नारओऽस्स कुप्पइ अस्संजयअविरयत्ति अनमंतिं। पाविंसु अवरकंकं तं तह छट्ठंगओ नेयं ॥६४। जाए य पंडुसेणे गहियवया विमलगिरिकयाणसणा। सा लंतयंमि पत्ता महाविदेहंमि सिज्झिहिई ॥६५॥ अत्रोपनयलेशोऽयं—नियपाणचाएणवि परपाणा रक्खियव्वा जहा इहयं। धम्मरुइसाहुणा तह रक्खेयव्वा सया जीवा ॥६६॥ तह जो मरणंतेऽविहु मणसावि न खंडए नियं नियमं। सो सग्गाइं पावइ जह पत्तं धम्मरुइमुणिणा ॥६७॥ अमणुन्नमभत्तीए पत्ते दाणं भवे अणत्थाय। जह दीहो संसारो नागसिरीए तया जाओ ॥६८॥ उक्तश्चायमर्थः श्रीभगवत्यां, तथाहि—'तिहिं ठाणेहिं जीवा असुहदीहाउयत्ताए कंमं पकरेंति, पाणे अइवाइत्ता भवइ१ मुसं वइत्ता भवइ२ तहारूवं समणं वा माहणं वा हीलित्ता निंदित्ता खिंसित्ता गरहित्ता अवमन्नित्ता अमणुन्नेणं अपीइकारगेणं असणपाणखाइमसाइमेणं पडिलाहित्ता भवइ, एएहिं तिहिं ठाणेहिं जीवा असुहदीहाउयत्ताए कम्मं पकरंति' इत्थ—जचाइएहिं हीला मणसा निंदा परुक्खओ खिंसा। गरिहा तस्स समक्खं पराभवो होइ अवमाणो ॥६९॥ श्रुत्वेति दुष्कर्मलतालवित्रं, भव्या जना! धर्मरुचेश्चरित्रम्। अक्षुद्रसौख्याय यथोक्तशुद्धाश्चैत्यानि वंदध्वमपास्ततंद्राः ॥ ७० ॥ इति शुद्धान्त्रिके श्रीधर्मरुचिद्रौपदी-

संबंधः ॥ उक्तं मुद्रात्रिकमिति नवमं त्रिकं, संप्रति 'तिविहं च पणिहाण'मिति दशमत्रिकं गाथापादत्रिकेणाह—

पणिहाणतिगं चेइयमुणिवंदणपत्थणासरूवं वा । मणवयकाएगत्तं

यदिह मुक्ताशुक्त्या मुद्रया क्रियते तदेतत् प्रणिधानत्रिकं, किमित्याह–चैत्यमुनिवंदनाप्रार्थनास्वरूपं, अत्र पृथग्वंदनाशब्द-योगात् प्रथमं प्रणिधानं चैत्यवंदनारूपं जावंति चेइआइं इत्यादि, द्वितीयं मुनिवंदनालक्षणं जावंति केवि साहू इत्यादि, तृतीयं प्रार्थनास्वरूपं जय वीयरायेत्यादि, उक्तं च बृहद्भाष्ये–"अन्नंपि तिप्पयारं वंदणपेरंतभावि पणिहाणं । जंमि कए संपुन्ना उक्कोसा वंदणा होइ ॥१॥ चेइयगय१ साहुगयं२ नेयव्वं तत्थ पत्थणारूवं। एयस्स पुण सरूवं सविसेसं उवरि वुच्छामि ॥२॥ (२५३-२५४) ननु यदेतत् प्रणिधानत्रिकं उक्तं तत्किल वंदनावसाने विधीयते, 'अन्नंपि तिप्पयारं वंदणपेरंतभावी'त्यादिभाष्यवचनात्, ततः शेषा वंदना प्रणिधानरहितेति प्राप्तमित्याशंक्याह–'वे'ति अथवा, द्वितीयमपि प्रणिधानत्रिकमस्ति यत् समस्तं चैत्यवंदनायां विधीयते, किं तदित्याह–मनोवचःकायानामैकाग्र्यं–अकुशलरूपाणां निवर्तनं, समाधिः रागद्वेषाभावः अनन्योपयोगितेतियावत्, आह च–"इह पणिहाणं तिविहं मणवइकायाण जं समाहाणं। रागद्दोसाभावो उवओगित्तं न अन्नत्थ ॥१॥ एयं पुण तिविहंपि हु वंदंतेणाइओ हु कायव्वं। चिइवंदणमुणिवंदणपत्थणरूवं तु पज्जंते ॥२॥ अत्र चेयं भाष्योक्ता भावना–चिंतइ न अन्नकज्जं दूरं परिहरइ अट्टरुद्दाइं। एगग्गमणा अर्थालंबनयोरिति गम्यं वंदइ मणपणिहाणं हवइ एयं ॥१॥ विगहाविवायरहिओ वज्जंतो मूयढड्ढरं सद्दं। वंदइ सपयच्छेयं वायापणिहाणमेयं तु ॥२॥ पेहंतपमज्जंतो उट्ठाणनिसीययाइयं कुणइ। वावारंतररहिओ वंदइ इय कायपणिहाणं ॥३॥" (वन्दन) पंचाशकेष्वप्युक्तं–"सव्वत्थचि पणिहाणं तग्गयकिरियाभिहाणवन्नेसु। अत्थे विसए य तहा दिट्ठंतो छिन्नजालाए ॥ १ ॥ अस्या अर्थः–सर्वत्रापि–

समस्तायामपि चैत्यवंदनायां, न केवलं तदंत एव, प्रणिधानं यं,नरवाहननरेन्द्रवत् , क्व विषये ?, तद्गताः—चैत्यवंदनागताः क्रिया—मुखस्थगनमुद्रान्यासादिका यास्तासु१ तथा अभिधानानि—पदानि वर्णा—अक्षराणि तेषु२ तथाऽर्थः—अर्हदादिपदाभिधेयस्तस्मिन् विषयो—वंदनागोचरो भावार्हदादिर्दृष्टिगोचरो वा चैत्यबिंबप्रभृतिकस्तस्मिन्, तथाशब्दात् जयवीयरायेत्यादिप्रार्थनायामपि, 'दिट्ठंतो छिन्नजालाइ'त्ति तुर्यपदस्यैवं भावना, प्रेरकः प्राह—व इसु उवओगा जुगवं कह घडइ एगसमयंमि ? । दो उवओगा समये केवलिणोऽविहु न जं इट्ठा ॥१॥ आचार्यः—कमसोऽवि संभवंता जुगवं नज्जंति ते विभिन्नावि । चित्तस्स सिग्घकारित्तणेण एगत्त भावाओ ॥२॥ अत्र दृष्टांतश्छिन्नजालया—उल्मूकेन, यथा हि त म्यमाणं ॅ न्नजालमपि शीघ्रतया चक्राकारं प्रतिभासते, यद्वा 'केवलिणो उवओगो वच्चइ जुगवं समत्थनेएसु । छउमत्थस्सवि एवं अभिन्नविसयासु किरियासु ॥३॥ तथा चागमः—भिन्नविसयं निसिद्धं किरियादुगमेगया न एगंमि। जोगतिगस्सवि भंगियसुत्ते किरिया जओ भणिया ॥४॥ मणसा चिंतइ भंगे वयसा उच्चरइ लिहइ काएण। एवं जोगतिगस्सवि भंगिअसुत्तंमि वावारो ॥५॥ नरवाहणनरेन्द्रवृत्तं चैवम्—

अत्थि पुरी वइदेसा सुरपुरिदेसा सिरीहि पवरीहिं। तत्थ सढो दुवियड्ढो थड्ढो नरवाहणो राया ॥१॥ सइ जिणपणिहाणपरा दुहावि पियदंसणा पिया तस्स। निम्मियगुरुजणविणओमणओ तणओ अमोहरहो ॥२॥ किमिहऽज्ज पव्वमेसो पउरजणो जाइ जं इह सुवेसो। इगदिसिऽभिमुहोत्ति कोउगकलिओ ता (निवेण पु ओ) भणइ पडिहारो ॥३॥ देव ! कयकोवहाणी पसन्नवाणी खमाइगुणखाणी। सुव्वयसूरी पत्तो इह तन्नमणाय जाइ जणो ॥४॥ सो केरिसोत्ति कोउगकलिओ तो नरवईऽवि तत्थ गओ। नमिय निविट्ठाइ सहाय अह गुरू कहइ इय धम्मं ॥५॥ "पडिओ अकामनिज्जरनईइ गिरिपत्थरोव्व कहवि जिओ। अवि थावरो

तसत्तं लहइ तिचउरक्खयाइ तहा ॥६॥ तोऽवि नरत्ताऽऽरियखेत्तगोत्तअरुजत्तआऊअविगलत्ते । धम्ममई सुगुरुसवणे लद्धे दुलहा उ तत्तरुई ॥७॥ यदागमः—"आहच्च सवणं लद्धुं, सद्धा परमदुल्लहा । सुच्चा नेयाउअं मग्गं, बहवे परिभस्सई ॥ ८ ॥ ता लहिअ सुद्धसद्धं तव्वुड्ढिकए सयावि जीवेण । पणिहाणतिगपहाणा कायव्वा वंदणा पुण्णा ॥९॥ भणियं च—"वड्ढइ धम्मज्झाणं फुरंति हियए गुणा जिणाईणं । उल्लसइ सुहो भावो वंदंताणं सुपणिहाणं ॥ १० ॥ पणिहाणं पुण तिविहं मणवइकायाण संजमाहाणं । रागद्दोसा-भावो उवओगित्तं न अन्नत्थ ॥ ११ ॥ एयं पुण तिविहंपि हु वंदंतेणाइओ उ कायव्वं । चिइवंदणमुणिवंदणपत्थणरूवं तु पज्जंते ॥१२॥ अह आह निवो किं वंदणिज्जमेयाण गुणविउत्ताणं । नियमइविगप्पणाए ठविआणं चेइआण अहो ? ॥१३॥ तह सोअवज्जि-आण अनिययवित्तीइ भमणसीलाणं । भिक्खाआजीवगाणं जईण किं नाम नमणिज्जं ? ॥१४॥ नणु अपसन्नमणाणं जिणाण किं इत्थ पत्थणाइ फलं ? । नहि अफला पडिवत्ती बुहाण संसिज्जइ कयावि ॥१५॥ भणइ गुरू भो नरवर ! संति अणंता गुणा जिणाण धुवं । झाइज्जंति नमिज्जंति ठाविउं ते उ पडिमासु ॥ १६ ॥ एवं ध्यानद्वयसिद्धेः, आह च—"स्वर्णादिप्रतिमास्थितमर्हद्रूपं यथा-स्थितं पश्येत् । सत्प्रातिहार्यशोभं यत् तद्ध्यानमिह रूपस्थम् ॥ १७ ॥ प्रतिमादिषु देहस्थं यथास्वमूर्तिं जिनादिकं मनसा । तद्रूपं चात्मानं यद् ध्यायेत्तदिह रूपस्थम् ॥ १८ ॥ तथा चोक्तम्—(चिन्तिय पूरण) अमिघणा अतिपय पंगू न दिंति । इणि कारणि इह पत्थरा, देवत्तणु पाविंति ॥१९॥ नियमणसंकप्पो चिय सव्वत्थवि इत्थ होइ कज्जकरो । जो नेइ सत्तमीए खणेण पावेइ वा मुक्खं ॥२०॥ ता सुहआलंबणओ परिमाणविसुद्धिमिच्छता निच्चं । जिणपूअणाइ कुज्जा भविआण विबोहणत्थं च ॥२१॥ अत्र प्रयोगः—जिणवंदणाइ कुज्जा परिणामविसुद्धिहेउओ निच्चं । दाणादउव्व मग्गप्पभावणाओ व कहणं व ॥२२॥ सुद्धमणवयणतणुणो सुद्धायारा

सुवंभचेरा य । कयदुद्दमकरणद इसिणो सुइणो सया नेया ॥२३॥ यदाह व्या :-"चित्तं क्ष दिभिः शुद्धं,वदनं भाषणैः। ब्रह्मचर्यादिभिः कायः, द्धो गंगां विनाऽप्यसौ ॥२४॥ चित्तं रागादिभिः क्लिष्टमलीकवचनैर्मुखम् । जीवहिंसादिभिः कायो, गंगाऽप्यस्य पराङ्मुखी ॥२५॥ आह च-न शरीरमलत्यागात्, नरो भवति निर्म्मलः । मानसैस्तु मलैर्मुक्तो,भवत्येव हि निर्मलः॥२६॥ विषयेषु भृशं र ो, मानसं मलमुच्यते । विरागो हि पुनस्तेषु, निर्मलत्वमुदाहृतम् ॥२७॥ मृदो भारसहस्रेण,जलकुंभशतेन च । न ध्यंति दुराचाराः, तास्तीर्थशतैरपि ॥२८॥ आचारवस्त्रांतरगालितेन, सत्यप्रसन्नक्षमशीतलेन। ज्ञानांबुना स्नाति च यो हि नित्यं, किं भूयात् सलिलेन कृत्यम् ? ॥ २९ ॥ चिर्भूमिगतं तोयं, शुचिर्नारी पतिव्रता । चिर्धर्म्मपरो राजा, ब्रह्मचारी सदा शुचिः॥३०॥ शृंगारमदनोत्पादं,यस्मात् ानं प्रकीर्तितम् । तस्मात् ानं परित्यक्तं, नैष्ठिकैर्ब्रह्मचारिभिः॥३१॥ कामरागमदोन्मत्ता, ये च स्त्रीवशवर्तिनः। न ते जलेन शुध्यंति, स्नातास्तीर्थशतैरपि ॥३२॥ स्नानमुद्वर्तनाभ्यंगौ, तांबूलं दंतधावनम् । गंधमाल्यं प्रदीपं च, त्यजंति चारिणः॥३३॥ नोदकक्लि न्नगात्रो हि, स्नात इत्यभिधीयते । स स्नातो यो दमस्नातः,स बाह्याभ्यंतरः शुचिः॥३४॥ यो लुब्धः पि नः क्रूरो, दांभिको विषयात्मकः । सर्वतीर्थेष्वपि स्नातः, पापाद्धि मलिनश्च सः ॥ ३५ ॥ ज्ञानजले ध्यानहृदे, रागद्वेषमलापहे । यः स्नाति मानसे तीर्थे, स गच्छति परां गतिम् ॥३६॥ सव्वत्थ सममणाणं धणसयणाइसु ममत्तरहियाणं । निहंसियं रिसीणं अनिअयवित्तीइ परिभमणं ॥३७॥ यदाहुः परममुनयः-"अनिएअवासो समुआणचारिआ, अन्नायउंछं पयरिक्किया य । अप्पोवही कलहविवज्जणा य, विहारचरिआ इसिणं पसत्था ॥ ३८ ॥" तथा-"पडिबंधो लहुअत्तं न जणुवयारो न देसवि णं । नाणाईण अवुड्ढी दोसा अविहारपक्खंमि ॥ ३९ ॥ किंच-"मासं च चउम्मासं परं पमाणं इहेगवासंमि । बीयं तइयं

च तहिं मासं वासं च न वसिज्जा ॥४०॥" अन्येऽप्याहुः—"ग्रीष्महेमंतकान् मासानष्टौ भि : सदा चरेत् । दयार्थं सर्वभूतानां, वर्षास्वेकत्र संवसेत् ॥४१॥ तथा मार्कंडेऽपि—सर्वसंगपरित्यागो, ब्रह्मचर्यमकोपिता । जितेन्द्रियत्वमावासे, नैकस्मिन् वसतिश्चिरम् ॥४२॥ आरंभनियत्ताणं धम्मसरीरस्स रक्खणनिमित्तं । भिक्खोवजीवगत्तं पसंसिअं नणु महेसीणं ॥४३॥ यदुक्तं—'चरेन्माधुकरीं वृत्तिमपि प्रांतकुलादपि । एकान्नं नैव भुंजीत, बृहस्पतिसमादपि ॥ ४४ ॥ अवधूतां च पूतां च, मूर्खाद्यैः परिनिंदिताम् । चरेन् माधुकरीं वृत्तिं, सर्वपापप्रणाशिनीम् ॥४५॥ अथ प्रयोगः—इय गुणजुत्ता अममत्तणेण भावमलसुद्धिहेऊओ । मुणिणो पसंसणिज्जा सुतित्थगमणाइयं व सया ॥४६॥ यद् व्यासः—साधूनां दर्शनं श्रेष्ठं, तीर्थभूता हि साधवः । तीर्थं पुनाति कालेन, सद्यः साधुसमागमः ॥४७॥ कह अपसन्नाउ फलं लब्भंति मई ? असंगया जेण । सुमणाण फलंति अचेयणावि चिंतामणिप्पमुहा ॥४८॥ ता नाणाइमयत्ते पुज्जा कोवप्पसायविरहाओ । नियमणपसायहेउं नाणाइगुणे व जिणचंदो ॥४९॥" इय जुत्तिजुत्तमुत्तो गुरुणा पडिउत्तराखमो राया । सुपउक्कमणो बहु तज्जणाइ काउं समारद्धो ॥ ५० ॥ यतः—अप्रशांतमतौ शास्त्रसद्भावप्रतिपादनम् । दोषायाभिनवोदीर्णे, शमनीयमिव ज्वरे ॥५१॥ अह तं नाउं पियदंसणा य देवी सुओ अमोहरहो । आगम्म भणंति निवं पहु! नहु इह उमुचिअमिणं ॥ ५२ ॥ जओ—इह हीलिया उ हाणिं दिंति रिसी रोइयव्वयं हसिआ । अक्कोसिआ उ वहबंधणाइं पुण ताडिया मरणं ॥ ५३ ॥ किंच—तपस्विनि क्षमाशीले, नाति शमाचरेत् । अतिसंघर्षणादग्निश्चंदनादपि जायते ॥ ५४ ॥ जइ इय ता मह विसए धम्माधम्माइ अकहमाणेहिं । यव्वमिमेहिं भणितु निवो तओ सगिहमणुपत्तो ॥५५॥ हेवाडएण केणवि कयाइ अत्थाणगस्स अह रण्णो । एगो करी अगाहिअसिक्खविसेसो उव-

ट्ठविओ ॥५६॥ निवपुट्ठा गयलक्खणविउ पुरिसा वयंति देव! इहं। भद्दो मंदो य मिगो मिस्सा चउ गया हुंति ॥ ५७ ॥ तत्थ–सेयनहदीहपुच्छुन्नयग्गसव्वंगसुंदरो धीरो। महुपिंगच्छो भद्दो सरयमदो हणइ दंतेहिं ॥ ५८ ॥ थूलसिरदंतनहवालवालही सिंहपिंगलो मंदो। चलबहलवि चंमो करेण पहरइ वसंतमदो ॥ ५९ ॥ हेमंतमदो तासणसीलो गत्तावरेहिं हणइ मिगो। तत्थु- विगते तणुदंतदेहतयकंठनहकेसो ॥६०॥ अणुहरइ थोवथोवं रूवं सीलं च जो इमाण गओ। सो मिस्सो सव्वंगिहिं हणेइ मज्जइ अ सयकालं ॥६१॥ भद्दो सवायलक्खं तयद्धमुल्लं लहेइ मंदकरी। तस्सद्धं मिगहत्थी तयद्धमवि मिस्सजाइगओ ॥६२॥ तो सोउमिणं निवई तं भद्दगयं गहेइ तुट्ठमणा। हेडाउअं विसज्जइ दाऊण मणिच्छिअं मुल्लं ॥६३॥ तंमि निवो अह चडिऊण रायवाडीइ निग्गओ तत्तो। सरिय वणं धाविरथा विंझाभिमुहो जवेण करी ॥६४॥ अंकुसभिन्नसिरोऽविहु ता सो हयहत्थिजोहनिवहेहिं। सुनिकाइयकम्म- चउव पारिओ नेव पडिखलिउं ॥६५॥ सेरिहवराहमज्जाररिट्ठरूवाणि दूरगमणेण। धारंतो सो हत्थी खणेण अद्दंसणं पत्तो ॥६६॥ अडविगयाउ गयाओ उत्तरइ निवो विलग्गिओ रुक्खे। गहिऊण य भिल्लेहिं पुच्छिओ कोऽसि कत्तो तं? ॥६७॥ नियमकहंतं ताडित्तु जट्ठिमुट्ठीहिं वंधिय गया ते। अह कहवि निवो निसि छित्तु वंधणे लंघिउं अडविं ॥६८॥ छुहतण्हाइकिलंतो रज्जउरे गंतु भिक्खिउं भुत्तो। तहि वासं अलहंतो निसि उज्जाणे बहिं पत्तो ॥ ६९ ॥ तत्थ य नरवाहणनिव! नणु करिहरिओ इहागओ सित्ति। वुत्तो सुहंमगुरुणा भणइ ममं मुणह कह तुब्भे? ॥७०॥ नणु धम्माइ सविसए वारंतो हिंपि पयडो सि। इअ वुत्तो सो लज्जा- नमिरो गुरुणा पुणो भणिओ ॥७१॥ "धम्माइफले पयडेऽवि राय! रक्खाइए किहह जीवा। परलोअनिप्पिवासा मूढा मग्गाउ भस्संति ॥ ७२ ॥ निंदंता गुरुदेवे लोअविरुद्धंपि तह विहेमाणा। अत्तुकरिसा तंपिव अणत्थसत्थं निव! लहंति ॥ ७३॥ अज्जावि

किंपि न नट्ठं विसुद्धमग्गं भयाहि भूनाह!। दूरं गयावि लच्छी अणुसरइ नरं नयपवन्नं ॥७४॥ अह जायकम्म-विवरो अणुतावपरो निवो चरणलग्गो। विन्नवइ गुरुं भयवं! कह पावा मुच्चिहमिमाओ? ॥७५॥ "भणइ गुरू जिणमुणिवंदणेण पावमिह नासइ जमुत्तं। भत्तीइ जिणवराणं खिज्जंति पुरा कया कम्मा ॥७६॥ तथा—अभिगमणवंदणनमंसणेण पडिपुच्छणेण साहूणं। चिरसंचिअंपि कम्मं खणेण विरलत्तणमुवेइ ॥ ७७ ॥ जिणवरपणिहाणाओ जायइ जीवाण सयलसुहहेऊ। सुहगुरुजोगो मग्गाणुसारिया भवविरागित्तं ॥७८॥ तह गुरुजिणबहुमाणो इह परलोए अहिट्ठफलसिद्धी। लोयाविरुद्धकरणं परोवयारित्तणाईवि ॥७९॥" अह निवई नमिय गुरुं गयमिच्छत्तो गहेवि सम्मत्तं। जिणमुणिपणिहाणपरो गमइ दिणे दुकयनिंदाए ॥८०॥ अह अणुपत्ते सबले नमिय गुरुं भणइ पहु! पसीय कया। वइदिसिपुरीइ एज्जह इय वुत्तु निवो गओ सपुरं ॥८१॥ पियदंसणाइ देवीइ पुच्छिओ हत्थिहरणमाईयं। जिणधम्मलाभपेरंतमाह निवई नियचरित्तं ॥८२॥ तत्तो सुइसंमत्तो मुणिपयभत्तो जिणचणुज्जुत्तो। कयधम्मियबहुमाणो पालइ रज्जं सुपणिहाणो ॥८३॥" श्रीमत्सुधर्म्मसूर्यागमने चोद्यानपालविज्ञप्ते। सर्वर्द्ध्या भूभर्ता विनिर्ययौ मुनिपतेर्नंतुम् ॥८४॥ दयितासुतादिमहितो भक्त्या प्रणिपत्य तत्पदद्वंद्वम्। विहितांजलिः सविनयं विज्ञपयामास सूरिमसौ ॥८५॥ अचिराय प्रासीदत न किं स्वचरणारविंदवंदनतः। अस्माकमुपरि भगवन्! मुनिः—गाढं व्यग्रा नृपाः स्म वयम्॥ ८६ ॥ राजा—त्यक्तसमारंभाणां भवतामपि सर्वसंगविरतानाम्। किं व्याकुलत्वमेतद्? मुनिः—वसुधाधव! विद्धि युद्धकृतम् ॥८७॥ राजा—अहह समशत्रुमित्र! क्षेत्रादिविरोधकारणलवित्र!। प्रशमधन गतयोधन! किमिति तवायोधनविधानम्! ॥८८॥ महदाश्चर्यं भगवन्! कथय कथं केन कलिरजनि वोऽत्र। गुरुरथ जगौ गवेश्वर! शृणु तदिह गुरुः प्रबंधोऽयम् ॥८९॥ तथाहि—श्रुत्वैकदा गतं मां प्रम-

त्तरांयतवने प्रमादचरात् । सत्वरमभ्यपिपेणद् भवचक्रव्यूहतो मोहः ॥९०॥ तत्राग्रिमधारायां तस्थुरनंतानुबंधिनो योधाः । मे
दर्शनमोहश्चरित्रमोहस्तदपसव्ये ॥ ९१ ॥ पार्श्वत आयुर्नाम्नी वेद्यं गोत्रं च पृष्ठधारायाम् । अग्रारकेषु क : सनोकषायो जगद्वीरः
॥९२॥ पश्चिमपार्श्वारिषु ज्ञावरणीयांतरायसामंताः । भवचक्रसुदृढनाभौ मोहनरेन्द्रः प्रबलवीर्यः ॥ ९३ ॥ राजा–भगवन्! भवता
त्रिभुवनहितेन मोहस्य किमिति वैरमिह ?। गुरुः–शृणु नृप! ममास्य यद्वैरकारणं सावधानमनाः॥९४॥ पूर्वं दत्त्वाऽनेकासुखानि
चरमांगतामहास्त्रेण । अवधिषमस्य सुरासुर्नरकायुस्तिर्यगायूंषि ॥ ९५ ॥ राजा–ततः ततः, गुरुः–मोहनृपविजयढक्कासु वाद्यमानासु
विविधविकथासु। समरभरायोच्छलितो विषयादिभटौघतुमुलरवः ॥९६॥ किमिदमहमिति हि विमृशन्नुपयोगचरेण सर्वमज्ञायि।
तदनु द्रुतं व्यरचयं तत्क्षपकश्रेणिखव्यूहम् ॥ ९७ ॥ तत्र चरित्रनरेन्द्रो मध्ये तद्दक्षिणेऽस्य वरपुत्रः । तस्थौ दशसुभटयुतो यति-
धर्माख्यो महारथिकः ॥९८॥ वामे तु सप्तदशभटयुतोऽतिरथिकश्च संयमो नामा । अन्तर्महाव्रताख्याः प्रोस्फुरदुरुतेजसो रथिकाः
॥९९॥ संतोषमहावीरो बाह्याभ्यंतरतपश्चरणयोधः । चरणसुभटसप्ततिरेकतोऽन्यतरेऽन्यसप्ततिका ॥१००॥ शीलांगाष्टादशसहस्रसं-
ख्याः पदातयस्तदनु। शुभभावसचिववचनादारोहमहमप्रमत्ताश्वम्॥१०१॥ निजचित्तवृत्तिसत्रे ध्यानाहतपरशुशोधितक्षेत्रे। ध्याय-
भेरिवादनपूर्वं प्राविशमथ रणाय ॥१०२॥ पद्गः पद्गेन निषादेन निषादी च सादिना सादी। कुंताकुंति शराशरि युयुधाते ते बले
सुचिरम् ॥१०३॥ दुष्टाभिसंधितुरगा डुढौकिरे सांपरायिकाः म्लेच्छा । त्वरितं न्यपीपतं तान् विशुद्धियोगत्रिसेल्लहतान्॥१०४॥
सज्जीकृतबोधगुणाच्छुतधर्म्माद् ज्ञानसर्वलोहेन। मुक्तेन हतो हृदये पपात मिथ्यात्वभिल्लपतिः॥१०५॥ तदनु प्रधावितो मिश्रजातिको
मिश्रदृष्टिसामंतः। तत्त्वविनिश्चयखड्गेन खंडशोऽकार्षमहमपि तम् ॥१०६॥ सम्यग्दर्शननृपतिः शिरसि हतस्तत्त्वरुचिरुचिरयष्ट्या ।

इति सपरिकरे दर्शनमोहे वरमण्डलेशिनि विनष्टे। भयभीतमोहकटकं संत्यक्तपुद्गलो मां शरणमशिश्रियत नाथतया ॥ १०७ ॥ रथवरमपूर्वकरणं परबलपार्ष्णिप्रहाराय पश्चात् किंचिदपचक्राम ॥ १०८ ॥ तीव्रविशुद्धाध्यवसायदंडपतिढौकितं समारोहम्। गुणसंक्रमाद् गुणश्रेणिवर्णना प्राग्वत्तत्र ॥११०॥ ॥१०९॥ बध्नाति तथा स्थितिं स्थितिघातान् मयि विदधति हतरमांश्च रिपून्। गुणसंक्रमाद् ... चतुरोऽप्रत्याख्या- निजवीर्यार्पितमारोहमतुलमनिवृत्तिबादरसितेभम्। यावदरिहति कृते मामभि चचले तावदहितबलम् ॥१११॥ चतुरोऽप्रत्याख्या- नान् प्र ाख्य ान्वितान् महावीरान्। यावच्छेदं भेदं हन्मि विरतिनिशिततीरेभिः ॥११२॥ मायायुद्धप्रवणाः खेचर्यस्तावदंतरा न्य न्। निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिनामानः ॥११३॥ ताः सर्वतोऽधयंत्यः सद्बोधोद्यतनाखकृतविफलाः। चिक्षिपुरिमाश्च तदनु त्रयोदश प्रकृतयो न ः ॥ ११४॥ तिर्यग्दुर्गतिगत्यानुपूर्व्विका जातयश्चतस्रश्च। साधारण उद्योतस्तथाऽऽतपः स्थावरः सूक्ष्मः ॥११५॥ स्त्रीनररूपी वेदोऽथ धावितः प्रतिदहन्ननलशस्त्रैः। दमधाराधरधारासारैरफलय्य सोऽपि हतः ॥ ११६ ॥ मुंच- न्नथाक्षिविक्षेपलिप्तविशिखान् मृगेक्षणारूपी। वेदो न्यपायत विरागतार्द्धचंद्रांतरास्ता ॥ ११७ ॥ शूरोऽसीति सहामा रतिररतिः प्रहरमेति च सशोका। अहह कथं मारयतीतिजुगुप्सा प्रापतत् सभया ॥ ११८ ॥ अध्यारोप्य तथा ताः साधुसमाचारचक्रके भ्रमिताः। मुखरुधिरमुद्गिरंत्यः प्रत्यस्थि यथा च शशरुद्राक् ॥११९॥ रे तिष्ठ तिष्ठ निष्ठुर! निहत्य दयितादि मे क्व यासीति। जल्प- न्निजकमजानन्नागात् संकल्पयोनिरथ ॥१२०॥ निहतः सुदुस्तपस्तपःशक्त्याऽसौ निष्ठुरं जगभीरुः। घूर्णितविलोचनो भुवि पपात पुष्पायुधो झगिति ॥१२१॥ भेत्तुमथ तपःशक्तिं नृवेद्य उत्पाट्य विपयवशपरशुम्। निपतन् मदनोऽन्तरभूत् सुशीलमुद्गरहतः कणशः ॥१२२॥ ज्वलन इव संज्वलन्नथ युधे प्रधावन्नुदायुधः क्रोधः। निधनमधत्ताशु मया क्षांतिडया(गदा)खंडितकरोटिः ॥ १२३ ॥

मानमपि भटमन्यं यथेष्टमुष्टीकम मूनमतिः। मार्दवगदया पटु कुटकपालवत् कुट्टयामास ॥ १२४ ॥ इति मे द्वेषगजेन्द्रो निरर्ग- लोऽतुच्छमत्सरोऽ र्थम्। मथ्नन् बलं यथेच्छं सुसाम्यतापरिधया पिपिषे ॥ १२५ ॥ अथ—मायाव्याघ्रीं ग्रसितुमुत्थितां विकृत- विकटकपटास्याम्। सरलत्वशल्यकीलिततालुजघनर्जुतश्चूर्याम् ॥ १२६ ॥ लोभस्तु खंडशः खण्डितोऽपि भूयो विवर्द्धयन्नुच्चैः। संतोषशंकुना कीलितो मया प्रेतवन्मंत्रः ॥१२७॥ एवं चरित्रमोहे त्रिकरणशुद्धित्रिशूलसंभिन्ने। मोहनरेंद्रोऽढौकिष्ट रागकेसरिस- मारूढः ॥१२८॥ स्फुटमुत्कटविकटाटोपभीषणस्तप्ततामतताम्राक्षः। पटु घटितललाटतटभ्रकुटिरसौ मामिति ततर्ज ॥१२९॥ एह्येहि तिष्ठ ति त्र गच्छ गच्छाद्य मुंच मुञ्चास्त्रम्। मा रे मुधा म्रिय म्रिय युध्यस्व युध्य ॥ १३० ॥ श्रीचारित्रनरेन्द्रप्रहितमितः सूक्ष्मसंपरायाख्यम्। सरभसभंगुरमासाद्य सपदि तस्याभ्यसार्षमहम् ॥१३१॥ युद्ध्वा क्ष दहं सूक्ष्मसंपरायोग्रचरणचक्रेण। आरुह्य मोहमौलिं लघु लुलुवे कमलनालमिव ॥१३२॥ मोहनृपं च विनष्टं दृष्ट्वाऽखिलं विनायकं नश्यत्। तत्क्षतये क्षिप्रं क्षीणमोहभुव- मगममुत्प्लुत्य ॥ १३३ ॥ निद्राप्रचलाख्ये अंधकारपद्यावथांतरे कृत्वा। सहसा प्रच्छन्नीभूय तस्थिवत्तदखिलमखिलम् ॥ १३४ ॥ मुमुचे तदनु मयोल्काशतानि मुंचंति तडत्तडिति कुर्वन्। सुप्रणिधानवता शितकोटिसितध्यानशतकोटिः ॥१३५॥ तेन च निर्दह्य तके झगिति युगपन्न्यदाहि तृणदाहम्। दर्शनचतुष्कविघ्नकपंचज्ञानावरणपंचत् ॥१३६॥ भूयांसश्चारिभटाः चारभटा अपि जगत्त्रय- जयेऽथ। तत्तेजोऽपि निरीक्षितुमपि नालंभूष्णवोऽभूवन् ॥१३७॥ रंध्रेषु केऽपि झंपामदुर्निकुंजेषु लिलियिरे केऽपि। बुब्रूडरंबुनि केऽपि प्रविविशुरपरेऽङ्ग! गिरिदरिषु ॥१३८॥ तत्यजुरितरेऽस्त्राणि प्रामुंचन्नेकके तु वस्त्राणि। केऽपि मृतीभूयेवास्थुरवनिलुठिताः निश्चेष्ट्याः ॥१३९॥ तदनु च गगनेऽभ्रामं ध्यानांतरिकापटीमहं यावत्। तावत् केवललक्ष्म्या वव्रेऽन्वर्पन् मानि राः ॥१४०॥ इति वैरि-

विधातार्थं सयोगिनो व्यग्रता मम नृपासीत्। नष्टाऽरिषु निःशेषं गतेषु नु स्यादयोगित्वम् ॥१४१॥" श्रुत्वेति नृपो मुदितोऽस्तौदिति भगवन्निमे हताः स्थाने। अहिताहितजगदहिता भवता जगदेकवीरेण ॥१४२॥ गत्वाऽथ नृपः स्वगृहे राज्ये विन्यस्य सुतममोघरथम्। ससमाधानो दीक्षां सुधर्मगुरुसंनिधौ जगृहे ॥१४३॥ विहितानशनविधानः सुप्रणिधानः सदोज्झितनिदानः। प्राप्ततृतीयकल्पे मुक्तिं गंता तृतीयभवे ॥ १४४ ॥ एवं निशम्य नरवाहनभूमिपालवृत्तं सुवृत्तजनसंमदकारि हारि। श्रीजैनचैत्यसुमुनिप्रणिधानयत्नं, भव्याः! कुरुध्वमचलीकृतयोगजाताः ॥१४५॥ इति नरवाहनराजवृत्तान्तम् ॥ इत्युक्तं प्रणिधानत्रिकमिति दशमं त्रिकं। अथ श्रोतुं त्वरमाणः शिष्यः प्राह-अत्र तावद्भगवद्भिः षड् त्रिकाणि व्याख्यातानि, शेषाणां तु का वार्तेत्याशंकासमुद्धरणाय गाथाचतुर्थपादेनाह—

सेसतियत्थो उ पयडुत्ति ॥ १९ ॥

शेषत्रिकाणां प्रदक्षिणात्रिकप्रणामत्रिकदिक्त्रयनिरीक्षणविरतित्रिकपदभूमिप्रमार्जनत्रिकलक्षणानां अर्थः पुनः प्रकटः—सुगम एवेति भाष्ये नोक्तः, विवृतौ तु यथाप्रस्तावं भावित एवेति समाप्तानि दशापि त्रिकाणि। एषां चैवं करणफलं लघुभाष्योक्तं—कम्माण मोहणीयं जं बलियं तीसठाणगनिबद्धं। तक्खवणट्ठा एवं तिगदसगं होइ नायव्वं ॥१॥ इय दहतियसंजुत्तं वंदणयं जो जिणाण तिकालं। कुणइ नरो उवउत्तो सो पावइ सासयं ठाणं ॥२॥" इति व्याख्यातं दशत्रिकाख्यं प्रथमद्वारं, अत्र च प्राक् साधुश्रावकादिबहुसमानेत्याद्युक्तं, तत्र चैत्यादि वंदितुकामः श्रावकः कश्चित् महर्द्धिको भवेत् श्रीषेणनृपादिवत्, कश्चित् सामान्यविभवः श्रीपतिश्रेष्ठिवत्, तत्र यदि राजादिस्तदा 'सव्वाए इड्ढीए सव्वाए दित्तीए सव्वबलेणं सव्वपुरिसेणं' इत्यादिवचनात्

प्रभावनानिमित्तं महद्‌ध्या चैत्यादिषु याति, अथ सामान्यविभवस्तदौद्धत्यादिपरिहारेण लोकापहासं परिहरन् व्रजति, तत्र चैत्ये प्रविशन् पंचविधाभिगमं करोति, इत्येतत्संबंधायातं द्वितीयं 'अभिगमपणगं'ति द्वारं विवृण्वन्नाह—

सच्चित्तदव्वमुज्झण१ मच्चित्तमणुज्झणं२ अणेगत्तं३। इगसाडिउत्तरा ंग४ अंजली सिरसि जिणदिट्ठे५ ॥२०॥

सचित्तद्रव्याणां स्वांगाश्रितानां कुसुमतांबूलादीनां उज्झनं—परित्यागः १ अचित्तानां—कटककुंडलकेयूरहारादीनां द्रव्याणां इत्यत्रापि योज्यं अनुज्झनं—अपरित्यागः २ मनएकाग्र्यं, रागद्वेषाभावेन मनःसमाधिरनन्योपयोगितेतियावत् ३ एकशाटक उत्तरासंगः ४ एकः—एकसंख्यो न द्व्यादयः शाटको देशांतरप्रसिद्धः पृथुलपटादिरूपो यत्र स उत्तरासंगः—उपरितनं वस्त्रं, प्रावरणवस्त्रमित्यर्थः, उक्तं च आचाराङ्गचूर्णौ—'एगसाडो, यदुक्तं भवति—एगपावरणु'त्ति तेन कृत्वा उत्तरासंग—उत्तरीयकरणं' कल्पचूर्णावप्युक्तं—'उत्तरिज्जं नाम पावरणं,' क्वचित् उत्तरिज्जं नाम पंगुरणमितिपाठः, एवं च एगेण पंगुरणवत्थेण उत्तरासंगो किज्जइ इति भणियं होइ,'अनेन च निवसनवस्त्रेणोत्तरासङ्गकरणनिषेधमाह', निवसनवसनस्यांतरीयशब्दवाच्यत्वात्, तथा च कल्पनिशीथचूर्णौ 'अंतरिज्जं नाम नियंसणं'ति, एकग्रहणं पुनरुत्तरासङ्गेऽनेकवस्त्रनिषेधार्थं, न तु सर्वथोपरितनप्रावरणवस्त्रस्य, एवं च परिहितैकवस्त्रो द्वितीयेन वस्त्रेण उत्तरासंगं कुर्याद् इत्युक्तं भवति, यदुक्तं पंचाशकवृत्तौ—'एकवस्त्रपरिधानः एकेन चोपरितनवस्त्रेण कृतोत्तरासंग' इति, मार्कण्डेयपुराणेऽप्युक्तं—नैकवस्त्रेण भुञ्जीत, न कुर्याद्देवतार्चनम्" इत्यादि, एतच्च पुरुषमाश्रित्योक्तं, स्त्री तु विशेषप्रावृताङ्गी विनयावनततनुलतेति, तथा चागमः—"विणओणयाए गायलट्ठीए"त्ति, एतावता शक्रस्तवादावप्यासां शिरस्यंजलिन्यासो न युज्यते, हृदादिप्रसक्तेः, यत्तु करयल जाव कट्टु एवं वयासीत्युक्तं द्रौपदीप्रस्तावे तद् भक्त्यर्थं न्युंछादिवदं-

जलिमात्रभ्रमणसूचनपरं, न च पुरुषैः सर्वसाम्यार्थं, न च तथास्थितस्यैव सूत्रोच्चारख्यापनपरं, अन्यत्रापि नृपादिविज्ञापनादाव-प्यादौ तथा भणनादित्याद्यु प्रायं, परिभाव्यमत्रागमाद्यविरोधि, वृद्धसंप्रदायात्तु संप्रति स्त्रीणां वस्त्रत्रयं विना देवार्चा कर्तुं न कल्पते, तथा अन्यैरप्युक्तं-'न कंचुकं विना कार्या, देवार्चा स्त्रीजनेन च' इति ४, अंजलिबंधश्च कार्यः शिरसि-मस्तके जिने दृष्टे-जिन-बिंबदर्शने सति इति गाथार्थः ॥ १७ ॥

इय पंचविहाभिगमो अहवा मुचंति रायचिह्वाइं । खग्गं छत्तोवाणह मउडं चमरे अ पंचमए ॥ २१ ॥

इति-पूर्वोक्तप्रकारेण पंचप्रकारोऽभिगमो भवति, उक्तं च श्रीपंचमाङ्गे-"पंचविहेण अभिगमेणं अभिगच्छइ, तंजहा-सच्चित्ताणं दव्वाणं विउसरणयाए १ अचित्ताणं दव्वाणं अविउसरणयाए २ एगसाडएणं उत्तरासङ्गकरणेणं ३ चक्खुप्फासे अंजलिपग्गहेण ४ मणसो एगत्तीभावकरणेण ५" क्वचित्तु 'अचित्ताणं दव्वाणं विउसरणयाए'त्ति पाठः, तत्राचित्तानां—छत्रादीनां व्यवसरणेन, व्युत्सर्जनेन इत्यर्थः, अन्यत्राप्युक्तम्—'पुष्फतंबोलमाईणि, सचित्ताणि विव ए। छत्तवाहणमाईणि, अचित्ताणि तहेव य ॥१॥"त्ति ॥ एतदर्थप्रतिपादनार्थमाह-'अहवे'त्यादि, यद्वा यो महर्द्धिको-राजादिश्चैत्यं प्रविशति स पंचविधाभिगमसमये राजचिह्वान्यपि मुंचतीत्यत आह-अहवेत्यादि, अथवा विकल्पांतरसूचको, न केवलं सचित्तान्येव द्रव्याणि मुच्यंते, किं तर्हि ?, अचित्तान्यपि द्रव्याणि मुच्यंते-दूरीक्रियंते, कानि ?-राजचिह्वानि-राजलक्षणानि, तान्येवाह-खङ्गः-कृपाणः १ छत्रं-अ पत्रः २ उपानहौ-पादुके ३ मुकुटं-किरीटः ४ चामरा-वालव्यजनानि पंचमकाः ५ इति, तथा च सिद्धांतः—अवहट्टु रायककुहाइं पंच वररायककुहभूयाइं । खग्गं छत्तोवाणह मउडं तह चामराओ य ॥ १ ॥त्ति । श्रीषेणनृपतिश्रीपतिश्रेष्ठिकथा

चैवम्—सकलरसालंकारे भरतक्षेत्रेऽस्ति सुकविशास्त्र इव। सद्वृत्तं सुयतिगणं बह्वर्थयुतं वसंतपुरम् ॥ १ ॥ तत्राभवदवनि-धवः श्रीषेणः स्फुरदुरुप्रतापरविः। जिनराजवंदनाभिगमकरणविधिसेवनप्रगुणः ॥२॥ तस्याजनि जिनवचनैककौशलः क्षितिपतेः परं मित्रम्। प्रवरश्रियां निवासः श्रीद इव श्रीपतिः श्रेष्ठी ॥ ३ ॥ विहितप्रभातकृत्यः श्रीषेणनरेश्वरोऽन्यदाऽऽस्थाने। उद्भट-भटवादभटौघसंकटे यावदास्ते स्म ॥४॥ तावद् धूलिधूसरचरणेन स्वेदसार्द्रसिचयेन। आगत्यैकेन द्रुतमिति विज्ञप्तश्चरनरेण ॥५॥ देव! त्रिविक्रम इवोरुविक्रमो विक्रमध्वजो राजा। रणरसिकमनास्त्वां प्रति संप्रत्यत्रापतन्नस्ति ॥ ६ ॥ इति चरवचनं श्रुत्वा ललाटतटघटितभृकुटिर्नृपतिः। किंकरगणेन सहसा रणभेरीं ताडयामास ॥७॥ तच्छब्दाकर्णनझगितिमिलितचतुरङ्गसैन्यपरिक-रितः। श्रीपतिसहितः क्षितिपतिरभिषेणयति स्म तं शीघ्रम् ॥८॥ अविलंबितप्रयाणैः कतिभिरपि प्राप यावदटवीं सः। तावदख-ण्डितधारासाराधाराधरा ववृषुः ॥ ९ ॥ अवहन् सरितो नाहा वाहा इव वेगिनो घननृपस्य। ग्रंथा इव निष्टीका अभवंश्च सुदुर्गमा मार्गाः॥१०॥ तदनु च नृपःस्वशिबिरावासान्निरुपद्रवे क्वचिद्देशे। विक्रमनृपोऽपि कुत्राप्यरण्यशैले स्थितिमधत्त ॥११॥ अवहतविधि-ललितवशाच्छ्रीषेणनृपस्य सकलसैन्येऽपि। अत्यंतमशिवमभवत् ततो म्रियंतेऽश्वगजवृषभाः॥१२॥ रोरुदति पामरनरा विलापमात-न्वते वणिग्वर्गाः। विपसाद मन्त्रिमंडलमजनि महीजानिरपि दुःस्थः ॥१३॥ नृपवेश्मन्यथ हाहारवविरसप्रलपितध्वनिं श्रुत्वा। द्रागागुर्लघुगाचिवश्रीपतिसामंतमुख्यजनाः॥१४॥ मूर्च्छामीलितनयनं वीक्ष्य नृपं विगतचेतनं श्रेष्ठी। स्वगृहादानीय ववंध नृपभुजे रत्नकेयूरम् ॥१५॥ तन्माहात्म्यादुन्मिलिताक्षियुगलः सचेतनः क्षितिपः। श्रीपतिपृष्टः प्रोचे निजकं वैधुर्यवृत्तांतम् ॥१६॥ श्रेष्ठिवर! वे-त्रिसुभटास्खलितः कश्चिन्नरः समेत्याग्रे। उत्कटचपेटया मां कपोलफलके प्रणिजघान ॥१७॥ अपि खड्गव्यग्रकरस्ततोऽभवं मूर्च्छितो

विगतचित्तः । इयतः स्मरामि परतः सर्वं भवतां विदितमेव ॥१८॥ किंतु मयीवैतस्मिन् कटकजनेऽप्युपकुरुध्व सत्करुणां । श्रेष्ठीति नृपतिभणितोऽस्मरदमरं पूर्वसांगतिकम् ॥१९॥ सोऽप्यागत्य द्रुतमत्र नृपबले सकलमशिवमपजह्रे । प्रकटीकृतनिजरूपः प्रणनाम च श्रेष्ठिनं मुदितः ॥२०॥ अथ तुष्टो मंत्रिजनो विसिष्मये राजकं जनो हृष्टः । सर्वैरपि सैन्यजनैः प्रशंसितः श्रीपतिः स बहु ॥२१॥ विस्मयरसपरिपूरितहृदयो राजा जगाद हे देव ! । श्रेष्ठिवरिष्ठेन समं भवतामिह को नु संबंधः? ॥२२॥ स प्राह नरेन्द्र ! पुरा हेमपुरे समभवद् विजयनामा । वामात्मा सर्वेषां मलिम्लुचः सोऽन्यदा स्वपुरात् ॥२३॥ आगत्य भवन्नगरे रजनौ धननामविभविनो भवनात् । आदाय बहु द्रविणं त्वरितपदं निर्गतो यावत् ॥२४॥ तावदवितर्कितागतभवदीयारक्षकैरसौ ददृशे । नीत्वा प्रलपन्नलमथ तवाज्ञया वध्यवसुधायाम् ॥२५॥ क्षिप्तो विडम्ब्य बहुधा कृतांतरसनासमानशूलायाम् । अत्रांतरे समुज्ज्वलवेषेण विराजमानतनुः ॥२६॥ अल्पमहर्घाभरणो गृहीतपूजोपचारसंभारः । भक्तिभरभ्राजितपुत्रमित्रसुकलत्रपरिवारः ॥ २७ ॥ पितृवनसमीपदेशे बहुवापीकूपकुसुमफलरम्ये । स्वारामे चैत्यगृहे समागमच्छ्रीपतिश्रेष्ठी ॥२८॥ त्यक्त्वा सचित्तवस्तून्यमुक्तमुद्राद्यचित्तवस्तुगणः । वैकक्ष्यमेकशाटकमाधाय कृतांजलिर्मौलौ ॥२९॥ एकाग्रमनाः सम्यक् पंचविधाभिगममिति विनिर्माय । प्रभणन्नमो जिनेभ्यश्चैत्यगृहांतर्विवेश मुदा ॥३०॥ निर्माल्यादिकमुत्तार्य वर्यकुसुमैर्जिनेन्द्रमर्चित्वा । परिपूर्णचैत्यवंदनविधिना देवांश्च वंदित्वा ॥३१॥ यावन्निरगाच्चैत्यात् कंठस्थितजीवितेन विजयेन । तावदयाचि श्रेष्ठी गाढं तृषितेन जलपानम् ॥३२॥ तदनु स चौरः क्रूरोऽप्यगण्यकारुण्यनीरनीरधिना । एतेन महामनसा द्रुतमुदकं पाययामासे ॥ ३३ ॥ भणितश्च भद्र ! सुखदं संप्रति परलोकसंबलं लाहि । मधुमांसरजनिभोजनमदिरापानाद्यघं निंद ॥ ३४ ॥ जीववधानृतभाषणपरधनहरणान्यदारसुरतानि । वचनमनस्तनुविहितं स्वदुष्कृतं निजय !

गर्हस्व ॥३५॥ सर्वः पूर्वकृतानां स्वकर्म्मणां फलविशेषमिह लभते। इतरो निमित्तमात्रं सर्वत्र भवेत्ततो भद्र! ॥ ३६ ॥ मा कुरु खेदं गच्छ दीनतां मा व्रज क्वचित् कोपम्। जिनसिद्धसाधुधर्म्मान् कुरु शरणं त्रिभुवनशरण्यान् ॥३७॥ क्षुद्रोपद्रवविद्रवकरणं शरणं समस्तसिद्धीनाम्। स्मर पंचनमस्कारं सर्वापसारविसारम्। ॥३८॥ इत्यमुनाऽसौ विजयः समाधिमासादितः स्मरन् मनसि। पंचपरमेष्ठिमंत्रं मृत्वा प्रथमां दिवं प्राप ॥ ३९ ॥ यतः—"हिंसावाननृतप्रियः परधनाहर्ता परस्त्रीरतः, किंचान्येष्वपि लोकगर्हितमहापापेषु गाढोद्यतः। मंत्रेशं स यदि स्मरेदविरतं प्राणात्यये सर्वथा, दुष्कर्मार्जितदुर्गदुर्गतिरपि स्वर्गी भवेन् मानवः ॥४०॥ उत्पादानंतरविलसदवधिविदितात्मपूर्वभवचरितः। बहुपरिकरपरिकरितः स्वर्गादवतीर्य भूपीठम् ॥४१॥ पूर्वभवकथनपूर्वं महात्मनोऽमुष्य पदयुगं नत्वा। आर्पयदंगदमेतद्विजयसुरः स त्वहं भूपः ॥४२॥ किंचाभिगमादिकविधियुतजिनवंदनकसुरूयनुकृतवशात्। भविताऽयमग्रजन्मनि सुदृढप्रेमा परिवृढो मे ॥४३॥ इत्येनमेनसां ध्वंसकारकं नायकं कृतोपकृतिम्। बहुशः संवेशवशादिह चैत्य वंदे स्तुवे सेवे ॥४४॥ पूर्वभवोद्भववैरात् कटके भवतोऽशिवं मया विदधे। हत्वा कपोलपालौ चपेटयाऽचेतनस्त्वं च ॥ ४५ ॥ स्मरणादेतस्य पुनर्भवतः सैन्यं भवान् कृतः सुस्थः। इत्युक्त्वा विजयसुरः सहसा यावत्तिरोऽधत्त ॥४६॥ विज्ञप्तं गुप्तनरैस्तावन्नृपतेः पुरो यथा नाथ!। अद्य यदि देवपादाः ससैन्यमायाति परसैन्ये ॥४७॥ भवति भवतस्तदानीं लक्ष्मीरखिलाऽपि शात्रवी नूनम्। यद्विक्रमध्वजोऽयं नरपतिरप्रतिमपृतनोऽपि ॥४८॥ रे रे हताश! नरनायकाधम! स्वपुरमद्य गच्छ त्वं। स्थगयित्वा कर्णौ नूनमूनपुण्योऽन्यथा नासि॥४९॥ यदिह दिनद्वयमध्ये श्रीषेणः क्षितिपतिः समागंता। आदास्यते स राज्यं प्राज्यं सप्तांगमङ्ग! तव ॥ ५०॥ साटोपकोपकलितः कदर्थयिष्यति भृशं भवंतं च। विशतः पातालेऽपि न भविता

भवतः पुनर्मोक्षः ॥ ५१ ॥ आकाशवाचमुच्चैः श्रुत्वेति स्वपुरगमनशरणोऽसौ। अनमिलपन्नपि विहितोऽस्ति तव रिपुर्मंत्रिसामंतैः ॥५२॥ श्रुत्वैवं श्रीषेणः प्रमोदमदमेदुरो मनसि दध्यौ। श्रीपतिसुचरितरंजितसुपर्वविलसितमिदमवश्यम् ॥५३॥ सरभसताडितजयभेरिशब्दसंनिहितसकलबलकलितः। अथ निकटमेत्यसुभटैरभाणयन्नृपतिरिति शत्रुम् ॥५४॥ भो भो नरेन्द्र! पूर्वं मदोर्जितं गर्जितं प्रहरणाय। अवसर्पतस्तु सांप्रतमहो तव श्मश्रुधारित्वम् ॥५५॥ द्विरसन इव निजमंदिरदरीं प्रवेक्ष्यति कथं भवान् भूप!। श्रीश्रीषेणनरेन्द्रानुधाविनि प्रबलमंत्रबले ॥ ५६ ॥ रुदतो हसतोऽपि तव प्राघूर्णक एष तावदायातः। हसतैव ततो भवता समयोचितमस्य कर्त्तव्यम् ॥५७॥ भग्नोऽपि श्वाऽपि करोति दशननिष्कर्षणं ततोऽपि त्वम्। सहसा नश्यन्नूनं न्यूनत्वं स्वस्य दर्शयसि ॥ ५८ ॥ श्रुत्वेति विक्रमनृपः कोपवशादवगणय्य कारणिकान्। श्रीषेणमभ्यषेणयदतुलोत्साहः स्वबलकलितः ॥ ५९ ॥ तत उभयोरपि बलयोरग्रानीकं समारभत योद्धुम्। हरिकरिमुख्यासुमतां श्रीषेणो वीक्ष्य संहारम् ॥६०॥ गुरुकरुणारसरंजितहृदयः सदयं जगाद रिपुमेवम्। ननु हंत किमेभिः क्षुद्रजंतुभिर्बहुरपि निहतैः? ॥६१॥ उर्ध्वीभव त्वमाशु क्षणं पुरो मम कृपाणमादाय। येन झटित्यपि भवतो हरामि दोर्दण्डकंडूतिम् ॥६२॥ एवं निशम्य कोपारुणेक्षणो विक्रमः कृपाणकरः। भुवि समरस्य नियुद्धश्रद्धालुरवातरद्यानात् ॥६३॥ उत्तीर्य सपदि यानात् परिमंडितमंडलाग्रहस्ताग्रः। रणभुवमलमलमकृत श्रीषेणोऽपि क्षमानाथः॥६४॥ तौ जात्यताम्रचूडाविव नृपचूडामणी नियुद्धेन। विस्मयमुपजनयंतौ युयुधाते सुचिरमन्योऽन्यम् ॥६५॥ अथ दक्षतया श्रीषेणनरपतिर्विक्रमध्वजनरेन्द्रम्। लघुहस्ततया सुदृढं बबंध निजकोत्तरीयेण ॥६६॥ स्वाज्ञाकरणप्रवणं कृत्वा मुक्त्वा च विक्रममहीशम्। श्रीषेणनृपः क्रमशो महाविभूत्या पुरमागात् ॥६७॥ अन्येद्युः प्रातः कृतमज्जनकरस्फारसारशृंगारः। उद्धुरकंधरसिंधुरमधिरूढः प्रौढभरपुण्यः ॥६८॥ उद्दंड-

पुंडरीकेण लक्ष्यमाणः सुदूरतोऽपि जनैः। सुरसिंधुसलिलनिर्मलचलचामरवीज्यमानतनुः ॥ ६९ ॥ उन्नमितदक्षिणकरैर्मगधगणैः पठ्यमानरिपुविजयः। परितः प्रसृमरहरिकरिरथभटसंकटितनृपमार्गः ॥ ७० ॥ मधुमधुरस्वरसुंदरगायनजनगीयमानकीर्तिभरः। श्रीषेणनराधीशो युगादिदेवस्य चैत्यमगात् ॥ ७१ ॥ चतुर्भिः कलापकं॥ वीक्ष्य जिनबिंबमुन्मुच्य चामरच्छत्रखड्गमुकुटगजान्। श्रद्धालुसारपरिकरसहितो विहितोत्तरासंगः ॥७२॥ विधिना जिनसदनांतः प्रविश्य संपूज्य भगवतः प्रतिमाम्। एकाग्रमना नृपतिर्देवानभिवंदते यावत् ॥७३॥ श्रावकवेषास्तावत् केऽपि नरास्तत्र कथमपि समेत्य। अकृपाः कृपाणिकाया घातं राजानमभि मुमुचुः ॥७४॥ विधिशुद्धचैत्यवंदनविधानतत्परनरेन्द्रवासनया। रंजितमनसा शासनदेव्या ते स्तंभिताः सर्वे ॥७५॥ अथ किमिदं किमिदमिति प्रभणंस्तत्रागमज्जनः सर्वः। नृपतिरपि वलद्ग्रीवस्तथास्थितांस्तान्निरीक्षिष्ट ॥७६॥ अभयप्रदानपूर्वं नृपपृष्टस्तेऽभणन् यथा देव!। भवतो घाताय वयं प्रहिता विक्रमनरेंद्रेण ॥७७॥ धिक् कथमदयं त्वां नृपतिलक! निहंतुं समुद्यताः पापाः। इति सन्मनसः सर्वे ते द्रुतमुत्तंभि देव्या ॥७८॥ अथ नृपतिरप्रदर्शितवदनविकारः स्वधाममागत्य। तानानाय्य यथोचितकृतसत्कारान् विसृज्य ततः ॥७९॥ दध्याविभिमरतस्करविषधरजलमलादिरोधाद्यैः। वह्नन्तं कैरंतं न नीयते जीवितं यावत् ॥८०॥ तावद् विमुक्तसंगैरङ्गीकृतचरणगुणगणैर्भव्यैः। सज्ज्ञानाधिगमपरैस्तुर्यपुमर्थाय यतितव्यम् ॥८१॥ इति चिंतयतो नृपतेः सत्वरमुद्यानपालका एत्य। श्रीभु भानुसुगुरोरागमनमचीकथन्नुच्चैः ॥८२॥ श्रुत्वेति नृपस्तेभ्यो दत्वा दानं सुतादिपरिकलितः। गत्वा नत्वा च गुरून् अशृणोदिति देशनां सम्यक् ॥८३॥ "यावन्न जरा न रुजा न विप्रसंघो न चेन्द्रिये हानिः। तावदलममलमतिना स्वहितकृताबुद्यमः कार्यः॥८४॥" इत्याकर्ण्य सकर्णः क्षितिपः पुत्रं सुलोचनं राज्ये। कृत्वा जगृहे दीक्षां पार्श्वे श्रीभुवनभानुगुरोः ॥८५॥ श्रीषेण-

मुनिः सुचिरं परिपालितनिरतिचारचारित्रः । निष्ठापिताष्टकर्म्मा स्थानकमपुनर्भवं प्राप ॥ ८६ ॥ विहितयथाविधगृहमेधिधर्मकः श्रीपतिः पुनः श्रेष्ठी । अभ्यगमत् प्रथमदिवं क्रमाद्गमिष्यति ततः स शिवम् ॥८७॥ क्षुद्रोपद्रवविद्रवेहितफलान्याकर्ण्य भूमीभृतः, श्रीषेणस्य जिनानिति प्रणमतः स श्रीपतिश्रेष्ठिनः। द्विः पंचाभिगमादिशुद्धविधिना श्रीअर्हतां वंदने, सर्वत्राभ्युदयप्रदायिनि जना ! यत्नं कुरुध्वं सदा ॥८८॥ इति अभिगमपंचके श्रीषेणनरेन्द्रश्रीपतिश्रेष्ठिकथा ॥ सिद्धान्तोदधितोऽधिगम्य सुगुरोः श्रुत्वा सदाम्नायतोऽविच्छिन्नागतसत्क्रियाक्रमविधेः सम्यक् समासाद्य च। संघाचारविधौ हि चैत्यनमनाख्याद्याधिकारेऽर्हतां,चैत्यादि-प्रविवेशवर्णनपरः प्रस्ताव आद्यः स्मृतः ॥१॥ इति श्रीदेवेन्द्रसूरिशिष्यमहोपाध्यायश्रीधर्म्मकीर्तिसमुत्कीर्तिते श्री-सङ्घाचारनाम्नि चैत्यवंदनादिविवरणे चैत्यवंदनाभिधानप्रथमाधिकारे चैत्यप्रवेशादिविधिवर्णनो नाम प्रथमः प्रस्तावः समर्थितः ॥

ॐ नमः प्रावचनिकेभ्यः ॥ प्ररूपितमभिगमपंचकमिति द्वितीयं द्वारं, तत्प्ररूपणेन च प्रदर्शितो जिनभुवनादिप्रवेशविधिः, संप्रति चैत्यवंदनाकरणविधिरुच्यते, तत्र यैर्यद्दिक्संस्थैश्चैत्यवंदना विधेया तत्प्रतिपादनाय तृतीयं 'तिदिसी' ति द्वारं गाथापूर्वार्द्धेनाह—

वंदंति जिणे दाहिणदिसिट्ठिया पुरिस वामदिसि नारी ।

वंदंते—स्तुवंति प्रणमंति च जिनान्—जिनप्रतिमाः दक्षिणदिशि—मूलबिंबदक्षिणदिग्भागस्थिताः पुरुषाः, पुरुषप्रधानत्वात् धर्मस्य, तथा वामदिशि—मूलबिंबवामदिग्भागे स्थिता नार्यो, वंदंते जिनानित्यत्रापि योज्यमिति नैसर्गिको विधिः ॥ विधिप्रधानमेव च

विधीयमानं सर्वमपि चैत्यवंदनवंदनकादिधर्मानु नं महाफलं भवेद्, अन्यथा सातिचारतया श्रीदत्ताया इव कदाचिदनर्थमपि जनयेत्, आह च–"धर्मानुष्ठानवैतथ्यात्, प्रत्यपायो महान् भवेत्। रौद्रदुःखौघजनको, दुष्प्रयुक्तादिवौषधा ॥१॥"दिति, अत एवाविधिनाऽस्य विधाने सातिचारत्वात् प्रायश्चित्तमप्युक्तमागमे, तथा च महानिशीथसप्तमाध्ययनसूत्रं 'अविहीए चेइयाइं वंदिज्जा तस्स णं पायच्छित्तं उवइसिज्ज, जओ अविहीए चेइयाइं वंदमाणो अन्नेसिं असद्धं जणेइ इइ काऊणं" इदमेव चावैतथ्येन विशुद्धधर्मानु नकरणं श्रद्धालोर्लक्षणं, तथा–विहिसारं चिअ सेवइ (सिद्धान्ता) सत्तिमं अणुट्ठाणं। दव्वाइदोसनिहओवि पक्खवायं वहइ तंमि ॥१॥त्ति, ललितविस्तराग्रामप्युक्तं–'एवं हि कुर्वता आराधितं वचनं, बहुमतो लोकनाथः, परित्यक्ता लोकहेरिः, अंगीकृता लोकोत्तरप्रवृत्तिः, समासादिता धर्म्मचारितेति, अतोऽन्यथा विपर्ययः, आलोचनीयमिदं सूक्ष्मधियामेव, शास्त्रोक्तमुपदेशमुल्लंघ्य पुरुपमात्रप्रवृत्तोऽपरो न हिताद्युपायः स्यात्' ननु तर्हि चैत्यवंदनादिविधिरपवादो गतानुगतिकरूपः स्यात्, नैवं, यत उक्तं 'अपवादोऽपि सूत्रानाबाधया गुरुलाघवालोचनपरोऽधिकदोपनिवृत्त्या शुभः शुभानुवंधी महासत्त्वासेवित उत्सर्गभेद एव। उत्सर्गस्थानापन्नत्वेनोत्सर्गफलहेतुत्वात्, यदागमः—उन्नयमविक्ख निन्नस्स पसिद्धी उन्नयस्स निंनं वं। इय अन्नुन्नाविक्खा उस्सग्गववाय दो तुल्ला ॥ १ ॥ अत एवोक्तं–"अविहिकया वरमकयं असूयवयणं भणंति समयन्नू। पायच्छित्तं अकए गुरुयं वितहे कए लहुयं ॥१॥" न पुनः सूत्र एव बाधया, गुरुलाघवचिन्ताऽभावेन, तद्धि परमगुरुलाघवकारिक्षुद्रसत्त्वविजृंभितं संसारश्रोतसि कुशकाशावलंबनप्रायमहितमिति भाव्यं सर्वथा, निरूपणीयं प्रवचनगाम्भीर्य,यतितव्यं उत्तमनिदर्शनेष्विति श्रेयोमार्गः" ॥ श्रीदत्ता कथा पुनरेवं—

अत्थिह पुव्वविदेहे विजए रमणिज्जए विअड्ढनगे। सिवमंदिरं पुरवरं  कित्तिधरो तत्थ  खयरनिवो ॥ १ ॥  स सुओ दमिआरी जाओ देवीइ  निलवेगाए। गयवसहकलसतिसुमिणसूइयपडिवासुदेवत्तो ॥ २ ॥  सुयस्स  दाऊणं गंतु अन्नविजयंमि। सिरिसंतिजिणसमीवे कित्तिधरो गिण्हई दिक्खं ॥३॥ अह नमियखयरनरवरचक्को चक्काणुगो पसाहेइ। दमि- आरी पडिविण्हू तं विजयड्ढं सवेयड्ढं ॥ ४ ॥ दमिआरिनिवस्स इओ  यरादेवीइ अन्नया  । नामेणं कणगसिरी सकंति- णिज्झिणिअकणगसिरी ॥५॥ कइआ नहसा सहसा नारयमितं निएवि दमिआरी। अब्भुट्ठिय सकारिय तमासणाईहिं पुच्छेइ ॥६॥ मुणि! किं दिट्ठमपुव्वं  अच्छरिअं कत्थवित्ति भणइ  णी। निव! सग्गेऽवि असंभवि दिट्ठं अज्जेव तं इक्कं ॥७॥ र  हिंति वुत्ते पुण भणइ मुणी  भापुरीइ इहं। संति निवा अपराइअअणंतविरिआ महाविरिआ ॥८॥ ताणऽग्गे किज्जंतं नट्टं बब्बरिचिलाइ- चेडीहिं। मणनयणाणंदयरं दिट्ठं से दिसिअणयणफलं ॥९॥ जह सोहम्मे  हो तह विजयड्ढंमि तमिह भूसक्को। अच्छरिअभूयव- त्थूण भायणं होइ नहु अन्नो ॥१०॥ अविय–तेणं नट्टेण विणा किं  व! र ई  वि अवरेण। इअ भणिउं उप्पइउंनहसा सहसा गओ स रिसी ॥११॥ अह दमिआरी दूयं आइसई  भपुरीइ सो गं । पभणइ ते अपराइअअणंतविरिआओ बलविण्हू ॥१२॥ भो इह जमब्भुअ वत्थु होइ दमिआरिणो तयं नूणं। पेसह चेडीरयणाणिमाणि ता रायर  ॥१३॥ "सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृणते हि विमृश्यकारिणं, गुणलुब्धाः स्वयमेव संपदः॥१४॥"इअ आलोइअ अचिरा चेडीओ पेसिमोत्ति ते हुत्तो। गंतुं दूओ साहइ पडिहरिणो सिद्धमिव कज्जं ॥१५॥ अह निसि ते बलविण्हू भणिआ पन्नत्तिपमुहविज्जाहिं। पुव्वभवसाहियामो सिद्धासयमेव भे इण्हिं ॥१६॥ तो ते जाव सहरिसा गोसे पूयंति  ओ वि  ओ। तो दमियारिस्स पुणो पत्तो

दूओ भणइ एवं ॥१७॥ भो निल्लज्जा नऽज्जवि पेसह चेडीउ ताउ नियपहुणो। बलिणा समं विरोहं कुणमाणा मा विणस्सेह ॥१८॥ यतः—"अनुचितकर्म्मारंभः प्रकृतिविरोधो बलीयसा स्पर्द्धा। प्रभुवचनेऽपि विमर्शो मृत्योर्द्वाराणि चत्वारि ॥ १९ ॥" सामेण तेहिं भणियं नणु दमिआरिस्स सव्वमवि देयं। जइ चेडीहिं विभूसइ ता गच्छऽज्जेव गहिय इमा ॥ २० ॥ इय भणिय दाउ दूयस्स मंदिरं तो दुवेविए बंधू। सामरिसा दिट्ठवो सो दमिआरित्ति मंतन्ति ॥ २१ ॥ कुलमंतिसु रज्जभरं आरोविअ काउ चेडिरूवं तो। सह दूएण गया ते दुन्निवि दमियारिनिवपासे ॥ २२ ॥ संभासिअ तेणुच्चिअं मायाचेडीउ ताउ भणियाओ। कणयसिरिं मह धूयं वरनट्टेणं रमावेह ॥२३॥ आमंति भणिय ताओ गंतुं तीए पुणो अभिनयंति। वरनट्टं तस्सग्गे अणंतविरियं च गायंती ॥२४॥ कणगसिरी भणइ हला गिज्जइ पुरिसुत्तमो इमो को णु ?। कहइ परा इय चेडी मयच्छि ! इह अत्थि सुभनयरी ॥ २५ ॥ तत्थासि थिमियसागररण्णो अपराजिओत्ति जिट्ठसुओ। गय १ वसह २ ससी ३ सागर ४ चउ-सुमिणयसूइयवलत्तो ॥२६॥ सिरि १ हरि २ रवि ३ घड ४ रयणो ५ जलहि ६ सिहि ७ सुमिणसूइयहरित्तो। बीओ सुओ अवीओ गुणेहि सेऽणंतविरिउत्ति ॥२७॥ नियरूवविजियमारो कयरिउमारो थिरत्तगिरिसारो। लच्छी इव सागरो जह भुवि अन्नो तारिसो नत्थि ॥२८॥ इअ सोउ पुलइआ सा साहइ नारी पुरीइ सा धन्ना। सो जीइ पहु अहमवि तं पासिस्सं नणु कयावि ॥२९॥ आह बलो तो विज्जाइ तं इहाणेमि सुयणु ! सा भणई। लहु पासिअ कुणसु एवं तो ते पयडंति निअरूवं ॥ ३० ॥ सा दट्ठुऽणंतविरिअं जंपइ निअसेविगाइ आइसह। भणइ हरी ता उट्ठह सुभगे ! जामो सुभं नयरिं ॥३१॥ भणइ कुमरीवि पभवह पाणाण व किंतु मह पिआ काही। विज्जावलिओऽणत्थं तुम्हं न निएमि निरवायं ॥३२॥ मा बीहि भीरु कयरो सो तुज्झ पिआ इहऽम्ह

पुरउत्ति । भणिआ कुमरी हरिणा रइअं सुविमाणमारुहइ ॥ ३३ ॥ अह ठाउ हरी गयणे भणेइ दमिआरिपमुहनिवनिवहा ! । भो सुणहऽणंतविरिओ भायजुओ नेइ कणयसिरिं ॥३४॥ मा भणिहिह निवधूयं चोरित्तु गयत्ति होउ सत्थधरा। लहु एह मोयह इमं नियह ससत्तिं उवेहह मा ॥३५॥ इय घोसिय ते चलिया सपुरिं पइ तं च सोउ दमियारी। आरागहिउव्व गओ कोवजुओ सयलवलकलिओ ॥३६॥ चलिओ सिं पिट्ठीए कोऽयं महिगोयरोत्ति भणमाणो। अह तेसिं तया जायाणि सीरधणुहाइं रयणाणि ॥ ३७ ॥ तो विज्जाइ रएउं दुगुणबलं ते ठिया चलियऽभिमुहा। भग्गं तेहिं परबलं दमियारी जुज्झइ सयं तो ॥३८॥ सरियागए उ चक्के भणइ हरे! रे मरिस्ससि इहं तो। अज्जवि मह धूयं मुत्तु जाहि दुब्बुद्धि ! मुक्कोसि ॥३९॥ पाणेऽवि तुह सुयंपि य गहिय गमिस्संति स भणिओ हरिणा। मुंचइ चक्कं तत्तुंबआहओ मुच्छिओ विण्हू ॥४०॥ बलवीरिओ पुणुट्ठिय तं चक्कं पासगा गहिय भणइ। दमियारि ! जाहि अज्जवि कणयसिरि- पियत्ति मुक्कोसि ॥४१॥ दमियारी भणइ अरे वन्नहरियधणेण धणवमवमण्णे। लहु मुंच इमं चक्कं सपोरिसं वावि मा मरसु ॥४२॥ अह तच्चक्केण हरी पडिविण्हुसिरं लुणेइ कुद्धो तो। उप्पणो विण्हू इय भणिया कुसुमे किरंति सुरा ॥ ४३ ॥ तो नमिरनिवइनिवहा सपुरिं पइ गच्छिरा बलहरी ते। कणयसिरिस्स समीवे पत्ता खयरेहिं इय वुत्ता ॥४४॥ मा पहु आसायणमिह करेह जिणचेइआणि संति जओ। ताणि उ जहाविहीए वंदिय गच्छंतु पहुपाया ॥ ४५ ॥ तो हरिसविअसियमुहा सपरिकरा ते नहाउ ओयरिउं। भत्तीइ चेइआइं ण्हवंति पूयंति पणमंति ॥४६॥ वरिसोववासपडिमं तह कित्तिधरं नियंति तत्थ मुणिं। अमरेहि महिज्जंतं तक्कालुप्प- न्नवरनाणं ॥४७॥ तं दट्ठु सुट्ठु तुट्ठा तिपयाहिणपुव्वयं नमिय नाणिं। निसियंति उचियठाणे तो भयवं कहइ इय धम्मं ॥४८॥ "इह निव्वुइपरमंगाणि जंतुणो दुल्लहाणि चत्तारि। मणुयत्तं धम्मसुई सद्धाणं संजमे विरियं ॥ ४९ ॥ चुलसीइलक्खजोणिसु बहु-

कुलकोडीसु भमिय कहवि जिओ। इह लहइ माणुसत्तं सुदेससुकुलाइसुपवित्तं ॥५०॥ तत्थवि कुतित्थबहुले लोए दुलहा विसुद्ध-
धम्मसुई। जीइ अहिंसगधम्मं पडिवज्जिय तरइ भवजलहिं ॥५१॥ धम्मेसुवि दुल्लहा तत्तरुई मिच्छत्तसेवए लोए। जं नेयाउयमग्गा
बहवे भस्संति मूढमई ॥५२॥ सद्दहणेऽविहु धम्मस्स फासया दुल्लहा उ काएण। कामगुणमुच्छिया जं विरमंति जिया न पावाओ
॥५३॥ जो उ मणुयत्तपत्तो सुद्धं धम्मं सुणित्तु सद्दहिउं। जहविहिणा उ अणुट्ठइ सो इह लहु धुणइ कम्मरयं ॥५४॥ ता धम्मा-
णुट्ठाणे करेह जत्तं सया विहिपहाणे। धारेह सुद्धभावं भविआ! वज्जेह वितहभावं ॥ ५५ ॥ जं विहियमणुट्ठाणे वितहत्तं कुणइ
दंसणं समलं। समले तंमि तवनियमवयगुणा हुंति न बहुफला ॥५६॥ किंच-धम्मगयं वितहत्तं थोवंपि विसं व हणइ सुहनिचयं।
वड्ढेइ दोसजालं जणेइ बहुऽणत्थवित्थारं ॥ ५७ ॥ उक्तं च-"धर्मानुष्ठानवैतथ्यात्, प्रत्यपायो महान् भवेत्। रौद्र-
दुःखौघजननो, दुष्प्रयुक्तादिवौषधात् ॥५८॥" अह पुच्छइ कणयसिरी भयवं! किं मे पुराकयं कम्मं। पत्तामि जेणऽणत्थं
इय पियवहबंधुविहराई ॥५९॥ भणइ मुणी पुण भद्दे! धायइसंडस्स पुव्वभरहंमि। संखउरनामगामे सिरिदत्ता इत्थिया आसी
॥६०॥ सा आजम्मदरिद्दा जीवइ काऊण परगिहे कम्मं। रंधणखंडणपीसणगिहलिंपणवारिवहणाई ॥ ६१ ॥ परगिहकम्मअभावा
कयाइ सा कट्ठकारणेण गया। सिरिपव्वयंमि सेले सच्चजसं नियइ तत्थ मुणिं ॥ ६२ ॥ तो सा चिंतइ जाणामि जम्मभिगमप्पणो
सचरिएहिं। न कयं सुकयं पुव्वं तेण इहं दुक्खिया जाया ॥६३॥ सइदुकम्मनिदड्ढाइ मे न थोवंपि इह कयं सुकयं। ता परभवेऽवि
मज्झं दुहमेव हि केवलं होही ॥ ६४ ॥ आजम्मउयरपूरणचिंताइ मयाइ मंदभग्गाए। भवकोडिदुल्लहं हारियं हहा माणुसं जम्मं
॥६५॥ ता अज्जवि मुणिमेयं नमिउं सोउं च एयउवएसं। सहलीकरेमि जम्मं निएवि तह एयमुहकमलं ॥ ६६ ॥ इय चिंतिय

गंतुं तत्थ णिं तं नमेइ तेण पुणो । दिन्नंमि धम्मलाहे हरिसियहियया भणइ एवं ॥६७॥ जइवि अजुग्गा भयवं! निम्मग्गाऽहं तहवि किंपि उवइसह । जेणं न होमि पुणरवि भवंतरे एरिसी दुहिया ॥६८॥ तो तीइ जुग्गयं सो वियारिउं धम्मचक्कवालतवं। उवइसई चिइवंदणविह पुव्वं सयलसुहयं ॥६९॥ तह तेणुत्तं भद्दे! इय धम्मं तुह सयावि साहीणं । विहीणा साहंतीए होही दुहमेरिसं न पुणो ॥७०॥ तो सिरिदत्ता इत्थं पभणिय नमिउं मुणिं गया सगिहं । विहिणा वंदिअ देवे आरंभइ तं तवं काउं ॥७१॥ तहिं कुणइ अट्ठमदुगं पढमं तो सत्ततीस उववासे। अह तप्पभावओ सा सुभोयणं लहइ पारणए ॥७२॥ तवचिइवंदणनिरयत्ति तीइ तह देइ अड्डसड्ढजणो । वरवत्थाणि तहा कम्मवेयणं दुगुणतिगुणंपि ॥७३॥ कइयाइ पडियनियघरकुड्डेगपएसओ बहुदविणं । सा लहइ तेण कुणई उ वणं तस्स सुतवस्स ॥ ७४ ॥ तवअंतपारणदिणे दिसावलोयं विहेइ जा ताव । मासक्खवणकिसंगं सुव्वयसाहुं नियइ इंतं ॥७५॥ हरिसंसुपुन्ननयणा तं पडिलाहइ तओ गए तंमि । धन्नंमन्ना मुणिदत्तसेसभत्तेण पारेइ ॥ ७६ ॥ अह सा गंतुं सुव्वयसाहुं नमिउं गहेवि गिहिधम्मं । दंसणमूलं पालइ कित्तियकालं निरइयारं ॥ ७७ ॥ कइयाइ कम्मवसओ चिंतइ जिणधम्मफलमिहप्पवरं । जं गिज्जइ किं तु तयं सच्चं होही ममवि एवं? ॥७८॥ नज्जइ न किंपि तह इह पयाहिणादिसु गहाइसमणफलं । सुव्वंति य बहुसामन्नवंदणा लद्धपवरफला ॥७९॥ इच्चाइ विचिगिच्छा जं जाया तीइ तारिसे सक्खं । दिट्ठेऽवि हु धम्मफले तदहो भवियव्वया बलिया ॥८०॥ तत्तो सिढिलियधम्मा विहिकरणअणायरा य सा कइया। सोउं सव्वजसमुणिं समागयं वंदिउं चलिया ॥८१॥ दट्ठु विमाणारूढं खयरदुगं अंतरे तओ वलिउं । जायणुरागा वररूवमोहिया सा गया सगिहे ॥८२॥ णालोइयपडिकंता सा मरिउं कणयसिरी तुमं जाया । पियमरणबंधुविरहाइ पाविया तेण दोसेण ॥८३॥ यदागमः—"जह चेव उ मुक्खफला

आणा आराहिया जिणिंदाणं । संसारदुक्खफलया तह चेव विराहिया होइ ॥ ८४ ॥" इय सुणिउं कणगसिरी विण्हुं पइ भणइ जहा जले नावा । छिड्डेणऽप्पेणवि दुक्कएणवि तह जिओऽवि भवे ॥८५॥ अप्पेणवि दुक्कएणं जइ एवं लब्भए दुहं दुसहं । ता सयलदुक्कयखाणीहि मह अलं कामभोगेहिं ॥ ८६ ॥ सामि ! पसीय दयावह मह दिक्खं सयलदोसखयदक्खं । वीहेमिमाउ भवरक्खसाउ एरिसछलपराउ ॥८७। भणइ हरी होउ इमं सुयणु ! परं इण्हि मुहपुरिं जामो। तत्थ सयंपहजिण- वरपासे दिक्खं गहिज्ज तुमं ॥ ८८ ॥ एवंति तीइ वुत्ते तो पत्तो सुभपुरीइ नमिय मुणिं । विजयव निवेहिं तओ अहिसित्तो अद्धचक्कित्ते ॥ ८९ ॥ अन्नदिणे तत्थागयसयंपहजिणंतियंमि कणयसिरी । गिण्हइ दिक्खं बलविण्हुविहियनिक्खमणवरमहिमा ॥ ९० ॥ कणगावलिमुत्तावलिरयणावलिभद्दपमुह विविहतवो । विहिणा उ तवेमाणा धम्माणुट्ठाणविहिनिरया ॥९१॥ उप्पन्ननाणरयणा वरदंसणदिट्ठसयलवत्थुगणा । सा कणयसिरी सिद्धा अणंतसुहवीरियसमिद्धा ॥९२॥ भो भो भव्या भव्यभावप्रधानाः, श्रीदत्ताया वृत्तमेतन्निशम्य । मा वैतथ्यं स्वल्पमप्यत्र धत्तानुष्ठाने श्रीतीर्थकृद्वंदनादौ ॥९३॥ इति श्रीदत्ताकथा ॥ इत्युक्तं द्विदिशि इति तृतीयं द्वारं, संप्रति द्विदिक्स्थितैरपि मूलबिंबस्य कियत्यवग्रहात् देवा वंदनीया इत्याशंकायां चतुर्थमवग्रहद्वारं गाथोत्तरार्द्धेनाह—

नवकर जहन्नु सट्ठिकर जिट्ठु मज्झुग्गहो सेसो ॥ २२ ॥

मूलबिंबात् नव हस्तान् जघन्यो—जघन्योऽवग्रहः,जघन्यतोऽपि उच्छ्वासनिश्वासादिजनिताशातनापरिहाराय नवहस्तबहिःस्थितैः देववंदना कार्या,षष्टिश्च हस्तान् ज्येष्ठ—उत्कृष्टोऽवग्रहः,तत्परतः उपयोगासंभवात् , मध्ये—मध्यमे शेषो नवकरेभ्य ऊर्ध्वं षष्टेश्चार्वाग् अवग्रहो मूलबिंबवंदनास्थानाभ्यंतरालभूभाग इति ॥ अन्यैः पुनर्द्वादशभेदोऽयमुक्तो । तथा च पंचस्थानकेऽभिहितं—उक्कोस

॥ ३ ॥" अथ गमनादौ प्रायस्तेजोवाय्वोरविषयत्वात् तौ विमुच्य जलादिविराधनार्थमाह—"ओसे"त्यादि, अवश्यायः—त्रेहः ठार इति यः प्र द्धः, प्रायः प्रातःप्रदोषनिशासु सदाऽऽपाती, यदागमः—"से नूणं भंते! सया समियं सुहुमे सिणेहकाये पवडइ?, हंता पवडइ,से नूणं भंते! किं उद्धं पवडइ अहे पवडइ तिरिये पवडइ?, गोयमा! उद्धं पवडइ अहोवि पवडइ तिरियंपि पवडइ"। सूक्ष्माप्कायोपलक्षणत्वादस्य, पणगेतिशब्दयोगाद्वा हिमकरगधूमरीहरतणुकाद्यपि ज्ञेयं, उक्तं च—"से किं तं सिनेहसुहुमे?, सिनेह- सुहुमे पंचविहे पण्णत्ते, तंजहा—करगा हरतणुए" एतत्संक्रमणे इति योगः, एवमग्रेऽपि पृथग् पृथग् योज्यम्, एतद्ग्रहणं च बहुजीवाश्रयत्वेन सूक्ष्मोऽप्यप्कायः परिहार्य इति ज्ञापनार्थं, यदाह—जत्थ जलं तत्थ वणं जत्थ वणं तत्थ निच्छिओ तेऊ। तेऊ- वाऊ सहगया तसा य पच्चक्खया चेव ॥ १ ॥" तथा "उदये पुढवी तस सेवालकं" यथा बह्वाश्रयत्वात् सूक्ष्माप्कायः परिहार्यः तथा अन्येऽपि जीवा ज्ञेया इत्याह—'उत्तिंगा' जीवावस्थितिस्थानानि, तत्पञ्चकं यथा, यदाह—से किं तं लेणसुहुमे?, लेणसुहुमे पंचविहे पण्णत्ते, कीटिकानगरादीनि दरकान्निश्रित्य पट्टिकादौ स्फुटिकाराजी वेलुकांतः संचरज्जीवकृता दाली रेखेत्यर्थः गर्दभा- कृतिजीवकृता वृत्तगर्त्तका ये भूयाः इति प्रसिद्धाः, सघुणकाष्ठादि च, यद्वा पुनरावृत्त्या पणगत्ति पंचवर्णा फुल्लिः सेवालः सलिल- मध्ये सेमलमित्यादि। दकं भौमान्तरिक्षाप्कायः, शेषजलं स्वपरकायादिशस्त्रानुपहतं, एतेनास्यापि सजीवत्वमुक्तं, यदागमः— "आऊ चित्तमंतमक्खाया अनेकजीवा पुढोसत्ता अन्नत्थ सत्थपरिणयेणं" "अन्येऽप्याहुः—"कुसुंभकुंकुमांभोवन्निचितं सूक्ष्मजंतुभिः। न दृढेनापि वस्त्रेण, शक्यं शोधयितुं जलम् ॥ १ ॥" युक्तिश्च सात्मकं जलं भूमिखातस्वाभाविकसंभवात् दर्दुरवत्, तथा मट्टीति कृष्णपीतरक्तश्वेतादिभेदात् अशस्त्रोपहता रजोरेणुकर्करशीलातुवरीलवणोपलाद्यशेषपृथ्वीकायोपलक्षणमिदं, एकग्रहणे तज्जातीयग्रहण-

मिति न्यायात् अनेनासावपि सजीवेत्याह, यदागमः—"पुढवी चित्तमंतमक्खाया अनेकजीवा पुढोसत्ता अन्नत्थ सत्थपरिणयेणं" युक्तिश्च—सात्मका विद्रुमलवणोपलादयः पृथ्वीविकाराः समानजातीयाङ्कुरोत्पत्तिप्रत्युपलम्भात् देवदत्तार्शोमांसाङ्कुरवत्, अथवा दगमट्टित्ति क्षेत्रक्षाराद्यनुपहतभूमौ चिक्खिल्लः तत्र सङ्क्रमणे, एवं वणमट्टि तसमट्टि वणोदग तसोदगेत्यादयः शेषा नव द्विकत्रिकादिसंयोगा ज्ञातव्याः, तदुपलक्षणत्वादस्य, भणितं च—"तेऊवाउविहूणा एवं सेसावि सव्वसंजोगा। नच्चा विराहणदुगं वज्जंतो जयसु उवउत्तो ॥१॥"इह तेजोवाय्वोरग्रहणं गमनागमनादौ प्रायोऽसंभवात्, संभवे वा दावानलनद्यादौ स्वल्पविषयत्वेनाविवक्षणात्, एगेंदियेत्यत्र जातौ ग्रहीष्यमाणत्वाच्च,एतयोश्चैवं सात्मकत्वं—सात्मकोऽग्निः यथायोग्याहारोपादानेन वृद्धिविशेषतद्विकारवत्त्वात् पुरुषवत्, आहारेण वृद्धिदर्शनाद् बालकवत्, तथा सात्मकः पवनः पराप्रेरितनियततिर्यग्गमनात् गोवत्, अन्यैरप्येषां षण्णां सात्मकत्वमभिधाय विराधनापरिहार उक्तः, तथा च भागवते पुराणे—"पृथिव्यामप्यहं पार्थ !, वायावग्नौ जलेऽप्यहम्। वनस्पतिगतश्चाहं, सर्वभूतगतोऽप्यहम् ॥१॥ यो मां सर्वगतं ज्ञात्वा, नैव हिंस्येत् कदाचन। तस्याहं न प्रणश्यामि, न चासौ मे प्रणश्यति ॥२॥" संयोगास्त्रसान्ता इहेति पुनस्तद्विशेषानाश्रियाह—मर्कटः लूताकोलिक इत्येकोऽर्थः निंवेलिकाख्यो वृत्तपिपीलिकादि, लालाजंतूपलक्षणमिदं, सन्तानस्तल्लालाजालकं, प्राकृतत्वात् स्त्रीलिंगः, यद्वा सन्तानः—परस्परानुलग्ना कृमिकीटिकादिश्रेणिः, हारीति याः प्रसिद्धा,यदुक्तं आचारांगचूर्णौ—"अहवा संताणओ पिपीलियाईणं"। तेषु संक्रमणे चंक्रमणे या विराधना तस्याः प्रतिक्रमितुमिच्छामीति विशेषहेतुसंपत् ४। अथ कियन्तः शृंगग्राहिकया कथयितुं शक्यन्ते इति पञ्चमीं संग्रहसंपदमाह —'जे मे जीवा विराहिया' किं बहुना ?—ये केचनान्येऽपि सूक्ष्मा बादराः त्रसाः स्थावरा ज्ञाता अज्ञाता लक्ष्या अलक्ष्या मे—मया इहाऽऽत्मनिर्देशेन स्वकृतफल-

भोजिनः प्राणिनः इति ज्ञात्वा स्वकृतपरिज्ञया आलोच्यमानं दुष्कृतं विफलीभवतीति ज्ञापयति, उक्तं च–"कयपावोवि मणुस्सो आलोइअ निंदिउं गुरुसगासे । होइ अइरेगलहुओ ओहरियभरुव्व भारवहो ॥१॥"जीवा–उच्छ्वासायुष्कादिप्राणभाजिनः विराधिताः–प्रतिकूलमाचरिताः आभोगानाभोगसह कारादिना दुःखे स्थापिताः, एतस्या विराधनायाः प्रतिक्रमितुमिच्छामीति पूर्वेण योगः, तस्या वा दुष्कृतं मिथ्या मे भवत्वित्युत्तरेण वा संबंधः, उक्तश्च–'आभोगमणाभोगे सहसाकारे य पडिक्कमणं"इति सर्वसंग्रहसंपत् ५। एताः प्रतिक्रमणश्रुतस्कन्धे पञ्च मूलसंपदः, तिस्रश्च उक्तानुक्तार्थसंपत्संग्राहितया चूलिकासंपदः, उभयमीलनेऽत्राष्टौ संपदः। अभाणि च "अब्भुवगमो १निमित्तं २ओहे ३अरहेउ ४संगहे ५पंच । जीवविराहणपडिक्कमणभेयओ तिन्नि चूलाए॥१॥"ते च के जीवा इति जीवभेदप्रतिपादकां मूलतः षष्ठीसंपदमाह–एगिंदया बेइंदिया तेइंदिया चउरिंदिया पंचिंदिया एकमेव स्पर्शनलक्षणमिन्द्रियं येषां ते एकेन्द्रियाः–पृथव्यप्तेजोवायुसाधारणप्रत्येकवनस्पतयः, एवं स्पर्शनरसननामेन्द्रियद्वयोपेता द्वीन्द्रियाः कृमिशंखादयः, स्पर्शनरसनघ्राणाख्येन्द्रियत्रयान्वितास्त्रीन्द्रियाः–मत्कुणयूकापिपीलिकादयः, स्पर्शनरसघ्राणचक्षूरूपेन्द्रियचतुष्टययुक्ताश्चतुरिन्द्रियाः–कोलिकवृश्चिकनिहालादयः,स्पर्शनरसनघ्राणचक्षुःश्रोत्रसंज्ञेन्द्रियपञ्चकोपेताःपञ्चेन्द्रियाः–मत्स्यपशुपक्षिसर्पनरामरादयः,एषा जीवभेदसंपत्६,अमी एकेन्द्रियादयः कथं कथं विराधिता इति विराधनाप्रकारप्रख्यापिकां सप्तमीं संपदमाह-"अभिहया वत्तिया लेसिया घाइया संघट्टिया परियाविया किलामिया उद्दविया ठाणाओ ठाणं संकामिया जीवियाओ ववरोविया" संफेडघातवदास्फालिताः पश्चात्कृता वा प्रतिस्खलिता वा प्रतिक्षिप्ता वेत्यादि, अभिहता वर्त्तिता अंकवत् पुञ्जपुञ्जीकृता अक्षरवद्वा इतस्ततो न्यस्ताः कर्पासादिवत् गाढाक्रान्ता वा कंटकादिवद् वा, धूल्यादिना निरुद्धा वृत्तिकृताः, श्लेपिता भूम्यादौ

लगिता ईषत् स्पृष्टा वा। अन्योऽन्यगात्रादिभिर्वा लिङ्गनकादिवत् मीलिताः, संघातिताः घृतेलिकादिवत् पिण्डीकृताः, लोलावटीकृता इत्यर्थः निरुद्धाद्यर्थं स्वमल्लादिवद् वा मिथो गात्रैर्मीलिताः, संघट्टिता मनाक् पीडिताः, यदागमः—"जरजज्जरो य थेरो तरुणाणं जमलपाणिमुच्छहओ। जारिस वेयण देहे एगिंदियघट्टणे तहय ॥१॥" परितापिताः सर्वाङ्गं पीडिताः कृताल्पपीडा वा, क्लमिताः कृतगाढपीडा ग्लानिं प्रापिता, जीवितावशेषीकृता यावत् अवद्राविताः, उद्द्राविता वा—उत्त्रासिता भयात् केचित् उत्कर्णीभूय स्थिताः केचिच्च पलायन्ते स्म केचिच्च पिण्डीकाचटनादिना मूर्च्छिता इव निश्चेष्टाः संजाताः इत्यर्थः, स्थानात् स्थानं स्थानादपस्थानं वा संक्रामिता वा—उत्पत्तिस्थित्यादिना ईप्सितत्वेन स्वस्थानात् शुभस्थानाद्वा अनुत्पत्त्यादिना अनाश्रितत्वेन परस्थानं सञ्चारिता—नीताः स्थानभ्रष्टा कृताः, रोलविया भोलविया इत्येकोऽर्थः 'जीवितात् व्यपरोपिताः' प्राणेभ्य उत्खनिता भ्रंशिता मारिता इत्यर्थः, एषा विराधना ७, ततः किमित्याह—'तस्स मिच्छामिदुक्कडं' पूर्वं यस्य विराधनाप्रकारस्य आलोचना कृता तस्याधुना मिच्छामिदुक्कडं, देमि इति शेषः, तस्स पडिक्कमामि इत्युक्तं भवति, आह च—"वोसिरिय पडिक्कमइ तस्स मिच्छुक्कडं देइ" यद्वा तस्य—उक्तार्थस्य विराधनाप्रकारस्य मिथ्यावशात् मूढत्वेन यन्मे दुष्कृतं—दुष्ठु अयतनया विधानं तत्पुनरावृत्त्या दुष्कृतं—तदुत्थं पापं मिथ्या—विफलं भवत्वित्यर्थः, एषा विराधनाप्रकारसंपत्। इयं च अस्या गाथातः एवं व्याख्याता—"जीवा विराहिया पंचमी उ पंचिंदिया भवे छट्ठी। मिच्छामि दुक्कडं सत्तमीऽट्ठमी ठामि उस्सग्गं ॥ १ ॥" अन्ये तु ववरोविया इत्यन्तां सप्तमीं मिच्छामिदुक्कडमित्यष्टमी-माहुः, भवति च सम्यग् मिथ्यादुष्कृतकर्त्तुर्विक्रमकुमारस्येवाशुभकर्मक्षयात् समीहितफलावाप्तिः, तथा चागमे—"जया ऊण किंचि अन्नाणमोहपमाइयाइदोसेणं सहसा एगिंदियाईणं संघट्टाइ कयं हविज्जा तया य पच्छा हा हा हा दुट्ठुकयमम्हेहिं घणराग-

दोसमोहमिच्छत्तअन्नाणंधेहिं अदिट्ठपरलोयपच्चवायेहिं कूरकम्मनिग्घिणेहिंति परमसंवेगमावण्णे सुपरिप्फुडं आलोइत्ता निंदित्ता गरहित्ता पायच्छित्तमणुचरित्ता नीसल्ले अनाउलचित्ते असुहकम्मक्खयट्ठा किंचि आयहियं चिइवंदणाइ अणुट्ठिज्जा तया तयट्ठे चेव उवउत्ते से भविज्जा, तया य सेयतया तस्स णं परमेगग्गचित्तसमाही हवेज्जा, जया परतया चेव सव्वजगज्जीवपाणभूयसत्ताणं अहिट्ठफलसंपत्ती हविज्जा" अत्र चैवं निरुक्तोऽर्थः—मित्ति मिउमद्दवत्ते छत्तिय दोसाण छायणे होइ। मित्ति य मेराइ ठिओ दुत्ति दुगुंछामि अप्पाणं ॥१॥ कत्ति कडं मे पावं डुत्तिय डेवेमि तं उवसमेणं। एसो मिच्छाउक्कडपयक्खरत्थो समासेणं ॥२॥) अथ ईर्यापथिकीसूत्रं व्याख्यायते, तच्चेदम्—'इच्छामी'त्यादि, इच्छामि—अभिलषामि प्रतिक्रमितुं—निवर्तितुं, कुतः?—इरियावहियाए १ विराहणाए २, ईर्या—गमनं तद्युक्तः पंथाः ईर्यापथः तत्र भवा ईर्यापथिकी विराधना—जंतुबाधा, मार्गे गच्छतां विराधनेत्यर्थः, तस्याः, अस्मिंश्च व्याख्याने ईर्यापथनिमित्ताया एव विराधनायाः प्रतिक्रमणं स्यात्, न तु शयनादेरुत्थितस्य, अतोऽन्यथा व्याख्या—तत्र ईर्यापथः—साध्वाचारः यदाह—"ईर्यापथो ध्यानमौनादिकं भिक्षुव्रतं" तत्र भवा ईर्यापथिकी विराधना नद्युत्तरणशयनादिभिः प्राणातिपातादिका साध्वाचारातिक्रमरूपा तस्याः प्रतिक्रमितुं इच्छामीति योगः, क्व सति विराधना?—गमणागमणे, गमने च स्वस्थानादन्यत्र आगमने च पुनः तत्रैव, तत्रापि कथं विराधना?—पाणक्कमणे इत्यादि, प्राणिनो द्वीन्द्रियादयः तेषामाक्रमणं—संघट्टनं एवं बीयक्कमणे०, बीजानि—शाल्यादीनि हरियक्कमणे—हरितानि—शेषवनस्पतयः, आभ्यां च सर्वबीजानां शेषवनस्पतीनां च जीवत्वमाह, प्रयोगश्चात्र—सचेतना वनस्पतयः आहारादिसद्भावे वृद्धिमत्त्वाद्बालकशरीरवत्, यो य आहारसद्भावे वृद्धिमान् स स सचेतनो यथा बालकशरीरं, वृद्धिमंतश्चैते आहारसद्भावे अतः सचेतना इति, इतश्च—सात्मका वनस्पतयः सर्वत्वगपहरणे मरणात् गर्दभवत्,

तथा ओसेत्यादि अवश्यायः—स्नेहः,अस्य च ग्रहणं बहुजीवाश्रयत्वेन सूक्ष्मोऽप्यप्कायः परिहार्य इति ख्यापनार्थ,यदाह—जत्थ जलं तत्थ वणं जत्थ वणं तत्थ निच्छओ तेऊ। तेऊ वाऊ सहगया तसा य पच्चक्खया चेव ॥१॥ उदए पुढवितसवालकंटयेत्ति, उत्तिंगा—भूमौ वृत्तविवरकारिणो गर्दभाकारा जीवाः कीटिकानगराणि वा, हरतनुकान्यन्ये,पनकः—पंचवर्णा फुल्लिः,तथा दगमृत्तिका अनुपहतभूमौ चिक्खिल्लः, यद्वोदकमप्कायो मृत्तिका पृथ्वीकायः, एतेनानयोरपि सजीवत्वमुक्तं, तथाहि—सात्मका विद्रुमलवणोपलादयः पृथिवीविकाराः समानजातीयांकुरोत्पत्त्युपलंभादेवदत्तार्शोमांसांकुरवत्, तथा सात्मकं जलं भूमिखातस्वाभाविकसंभवात् दर्दुरवत्, मर्कटसंतानः—कोलिकजालं यद्वा संतानः—कीटिकासमुदायः, यदुक्तमाचारांगचूर्णौ—"अहवा संताणओ पिवीलियाईणं"ति, तेषां संक्रमणे—आक्रमणे,एतावता च पृथ्वीजलवनस्पतित्रसेति चतुर्जीवनिकायविराधनोक्ता,न तु तेजोवातयोः, तयोर्गमनागमने प्रायेणा संभवात्, एतयोस्त्वेवं सात्मकत्वं—सात्मकोऽग्निर्यथायोग्याहारोपादानेन वृद्धिविशेषतद्विकारवत्त्वात्, पुरुषवत्, आहारेण वृद्धिदर्शनात् बालकवत्,तथा सात्मकः पवनः पराप्रेरिततिर्यगनियतगमनात् गोवदिति, अन्यैरप्येषां षण्णां सात्मकतमभिधाय विराधनापरिहार उक्तः, यथा—पृथिव्यामप्यहं पार्थ!, वायावग्नौ जलेऽप्यहम्। वनस्पतिगतश्चाहं, सर्वभूतगतोऽप्यहम् ॥१॥ यो मां सर्वगतं ज्ञात्वा, न च हिंस्यात् कदाचन। तस्याहं न प्रणश्यामि, स च मे न प्रणश्यति ॥ २ ॥" इति, अथ कियन्त्यः शृंगग्राहिकया कथयितुं शक्यंते इत्याह—'जे मे जीवा विराहिया', किं बहुना?—सर्वथा ये केचन मया जीवा विराधिताः—दुःखे स्थापिताः, ते च के इत्याह—'एगिंदिये'त्यादि,एकमेव स्पर्शनलक्षणमिंद्रियं येषां ते एकेन्द्रियाः—पृथिव्यादयः एवं स्पर्शनरसनोपेता द्वीन्द्रियाः—शंखादयः स्पर्शनरसनघ्राणयुक्तास्त्रीन्द्रियाः—कीटिकादयः स्पर्शनरसनघ्राणचक्षुरासन्विताश्चतुरिन्द्रियाः—वृश्चिकादयः स्पर्शनरसन-

घ्राणचक्षुःश्रोत्रसहिताः पंचेन्द्रियास्तिर्यग्नरामरादयः, विराधनाप्रकारमाह—'अभिहये'त्यादि, अभिमुखमागच्छंतो हताः—पादेन ताडिताः उत्क्षिप्य क्षिप्ता वा अभिहताः,वर्तिताः—पुंजीकृता धूल्यादिना वा स्थगिता गाढाक्रांता वा श्लेषिता—भूम्यादौ लगिता ईषत् पिष्टा वा अन्योऽन्यालिंगनं वा कारिताः संघातिता—मिथो गात्रैः पिंडीकृताः पुंजीकृता वा संघट्टिता—मनाक् स्पृष्टाः परितापिताः—सर्वतः पीडिता ईषत् कृतपीडा वा क्लामिताः—कृतबहुपीडाः ग्लानिं प्रापिता जीविताबशेषाः कृता इत्यर्थः, अपद्राविता—उत्रासिताः कृतमूर्छा वा स्थानात् स्थानान्तरं संक्रामिताः—स्वस्थानात् परस्थानं नीताः, जीविताद्व्यपरोपिताः मारिता इत्यर्थः, 'तस्स'त्ति अभिहयेत्यादिविराधनाप्रकारस्य 'मिच्छा मे दुकडं'ति मिथ्या मे दुष्कृतं, एतद्दुष्कृतं मिथ्या—विफलं मे भवत्वित्यर्थः, अस्य चैतन्निरुक्तं—"मित्ति मिउमद्दवत्ते छत्तिय दोसाण छायणे होइ । मेत्ति य मेराइ ठिओ दुत्ति दुगुंछामि अप्पाणं ॥१॥ कत्ति कडं मे पावं डत्तिय डेवेमि तं उवसमेणं । एसो मिच्छादुक्कडपयक्खरत्थो समारोणं ॥ २ ॥" सम्यग्मिथ्यादुष्कृतकर्तुर्विक्रमसेनकुमारस्येव शाम्येत अशुभं कर्म्म, तत्कथा चैवं—

अत्थि सयलामरहियं सुरपुरमिव सुरपुरं जईकलियं । तत्थासि नमिरनरवरचक्को चक्काउहो राया ॥ १ ॥ कमलदलच्छी लच्छीव नदीणया नम्मया पिया तस्स । विक्कमसेणो पुत्तो सो उण जूएण रमइ सया ॥ २ ॥ मज्जपसंगी वेसाइ परिगओ मंसभक्खणपयट्टो । पारिद्धीलुद्धबुद्धी विडंबए परकलत्ताइं ॥३॥ मित्तिं काऊण तलवरेण निसि पट्टणं मुसावेइ । गुत्तनरेहिं नाओ वुत्तंतो एस नरवइणा ॥४॥ तत्तो निडालतडघडियकुडिलफुडमिउडिभासुरमुहेण । रन्ना भणिओ कुमरो रे पाव ! अणज्ज निल्लज्ज ॥५॥ दुज्जाय मुक्कमज्जाय मायापिउलोयजणियदुक्खोहो । ओसर ओसर लहु मह दिट्ठिपहाओ महापाव ! ॥ ६ ॥ इय तज्जिओ

स पिउणा लहु नयरा निग्गओ अमरिसेण । पत्तो कमेण एगं पल्लिं पल्लीवई तत्थ ॥ ७ ॥ तस्सागिइउब्भडभणियवयणरयणाइरं-
जिओ बाढं । तं पल्लिवई भणइ भो इह चिट्ठसु सया सुहिओ ॥८॥ कइयावि हरिणवइणा विणासिए तंमि पल्लिनाहंमि । भिल्लज-
णपणयचलणो जाओ सो चेव तत्थ पहू ॥ ९ ॥ अणवरयसत्तसंघायघायउप्पज्जमाणगुरुहरिसो । थीबालवुड्ढवीससियपमुहजणवं-
चणप्पवणो ॥१०॥ पयईइच्चिय निस्संसचिट्ठओ पावघत्थबुद्धी य । किं पुण तव्विहबहुपावपयइजणजणियसंतोसो ॥ ११ ॥ इत्तो
कुसुमपुराओ वेसमणो नाम सत्थवाहवरो । उग्घोसणपुव्वं चलिय विविहजणनिवहसंजुत्तो ॥ १२ ॥ बहुपणियपुन्नखरकरहवसह-
गुरुगंतिवेसरसमूहो । नियजीवियं व सत्थं महया जत्तेण रक्खंतो ॥१३॥ कयतोसो बहुमुणिणा मुणिवइणा सिरिसमंतभद्दे-
ण । कुंभपुरं पइ चलिओ तं पल्लिपएसमणुपत्तो ॥ १४ ॥ अह उद्दामरतडिदंडडंबरो जलहरो जलभरेण । सव्वत्थ पसरिएणं
करेइ जलहिं व महिवलयं ॥ १५ ॥ तो मुणिवइणा मुणिणो भणिया भो नियह महियलं एयं । पयपवहनवयअंकुरपूरतससहससं-
किन्नं ॥१६॥ एयारिसंमि काले समणाणं नेव विहरिउं जुत्तं । तो इहयं पल्लीए उवस्सयं किंपि जाएह ॥१७॥ इय जा कहिंति
गुरुणो ता विक्कमसेणसंतिया धाडी । पडिया तीइ खणेणवि सत्थो गलहत्थिओ सव्वो ॥१८॥ नवरं विक्कमसेणस्स बद्धणाभिह-
पहाणपुरिसेण । पिउणो गुरुत्ति काउं मिल्लेहिं रक्खिया गुरुणो ॥१९॥ नियनियपल्लिपएसे मुक्का एगंमि समुच्चियगिहंमि । मुणिवइणा
सह मुणिणो ठंति तहिं विविहतवनिरया ॥२०॥ सिरिसमंतभद्दस्स सूरिणो सुक्कझाणजोगेण । अन्नदिणे उप्पन्नं संपुन्नं केवलं नाणं
॥२१॥ अह सन्निहियसुरेहिं पहयाओ दुंदुहीउ गयणंमि । पणवन्नकुसुमवुट्ठी मुक्का झणझणिरभसलउला ॥२२॥ सुरसुंदरीहिं नट्टं पय-
ट्टियं तयणु पल्लिनाहेण । पुट्ठा पल्लिनरा किमिणंति तेऽवि तं कज्जममुणंता ॥२३॥ अन्नुन्नमुहनिरिक्खणवावारा जाव किंपि नहु विंति ।

ता वद्धणेण वुत्तं एगमणो सुणसु निवपुत्त! ॥२४॥ पुव्वुल्लूरियसत्थस्स मज्झओ इय ठिया इमे मुणिणो। एसिं गुरुणो जायं संपइ किर केवलं नाणं ॥२५॥ तम्महिमकए एए देवा इत्थागया सदेवीया। तो विम्हयरसभरिओ पल्लिवई तत्थ लहु पत्तो ॥२६॥ दट्ठुं मुणिंदचंदं वदनकिरणेहिं तममवहरन्तं। तह अमरोहं सोहंतकुंडलं परमसुंदेरं ॥ २७ ॥ तो नमिय केवलिमुणिं निवतणओ पुच्छए कह मुणिंद!। गम्मइ एरिसअमरेसु तहय नरतिरिक्खजोणीसु ?॥२८॥"आह गुरू निवनंदण! जियरक्खासच्चवयणबंभेहिं। मंसाइवज्जणेण य गम्मइ एयारिससुरेसु ॥ २९ ॥ पयईइ तणुकसाओ दाणरओ सीलसंजमविहूणो। मज्झिमगुणेहिं जुत्तो जीवो अज्जेइ नरजम्मं ॥३०॥ उम्मग्गदेसओ मग्गनासओ गूढहिययमाइल्लो। सढसीलो य ससल्लो तिरिआउं बंधए जीवो ॥३१॥ जीववहणेण पलभक्खणेण पारिद्धिपमुहवसणेहिं। परधणहरणाईहि य गम्मइ जीवेहिं नरएसु ॥३२॥" इय सुणिय गुरुगिरं गुरूऽणुतावपरिगयमणो भणइ कुमरो। गंतव्वं केवलपावकारिणा मे धुवं नरए ॥३३॥ नत्थिहु कोऽवि उवाओ जेणं एयाउ पावपडलाओ। अप्पाणं सोधाविय पडेमि नहु नरयकूवंमि ॥ ३४ ॥ "गुरुराह सुण उवायं कुमार! तं देसु पावखवणकए। नियदुक्कडेसु मिच्छामि दुक्कडं अपुणकरणेण ॥३५॥ जहा विसं कुट्ठगयं मंतमूलविसारया। विज्जा हणंति मंतेहिं, तो तं हवइ निव्विसं ॥१॥ एवं अट्ठविहं कम्मं, रागदोससम ‍ यं। आलोयंतो य निंदंतो, खिप्पं हणइ सुसावओ ॥२॥ आवस्सएण एएण सावओ जइवि बहुरओ होइ। आलोयंतो य निंदंतो खिप्पं हणइ सुसावओ ॥ ३ ॥ तथाहि—पाणिवहालियचोरियमेहुणधण ‍ च्छरयणिभत्तेहिं। कुमर! विहियंमि पावे तं मिच्छादुक्कडं देसु ॥ ३६ ॥ मज्जुमं भक्खणेणं सुराइपाणेण ‍ व णेहिं। ‍ मर! विहियंमि पावे तं मिच्छादुक्कडं देसु ॥३७॥ गुरुकोवमाणमायालोभेहिं रागदोसमोहेहिं। कुमर! विहियंमि पावे

तं मिच्छादुक्कडं देसु ॥ ३८ ॥ जिणदिट्ठनाणदंसणचरणगुणाइसु पओसकरणेहिं । कुमर ! विहियंमि पावे तं मिच्छामिच्छादुक्कडं देसु ॥३९॥ साहूण साहुणीण य धम्मियलोयाण धम्मभंसेण। कुमर! विहियंमि पावे तं मिच्छादुक्कडं देसु ॥४०॥ मिच्छत्तं अहिगरणं अन्नंपि हु जं कयं तए पावं । असुहमणवयतणूहिं सव्वत्थवि तत्थ निवतणय ! ॥४१॥ हा दुट्ठु कयं हा दुट्ठु कारियं अणुमयंपि या दुट्ठु । इय पच्छायावपरो तं मिच्छादुक्कडं देसु ॥४२॥ इय मिच्छादुकडसुद्धसुगुरुपयडियविसल्लसोहीए । तरणिपहाए व तमं तुह पावं खिज्जिही नूणं ॥ ४३ ॥ किंच–मिच्छादुक्कडदाणंमि विहियचित्तस्स पाणिणो सययं । सग्गापवग्गलच्छीवि दुलहा होइ नहु भद ! ॥४४॥ यदागमः–"जस्स य इच्छाकारो मिच्छाकारो य परिचिया दोवि । तइओ य तहक्कारो न दुल्लहा सोगई तस्स ॥४५॥" तत्तो अतुच्छपच्छायावो गुरुणा जहा जमाइट्ठं । तह तं सव्वं काउं कुमरो गिण्हेइ गिहिधम्मं ॥ ४६ ॥ वज्जइ सत्तवि वसणे नियसीमाए करावइ अमारिं । अणवरयं केवलिणो सुस्सूसाए दिणे गमइ ॥४७॥ वित्ते वासारत्ते अन्नत्थ विहारउज्जुए गुरुणो । कित्तियमित्तंपि भुवं अणुवइउं भणइ दीणमणो ॥ ४८ ॥ मुणिपहु नहु पुव्वभवे पुण्णमखंडं मए कयं नूणं । जं होउ तुम्ह जोगो पुणवि विओगो इमो होइ ॥४९॥ यतः–"महद्भिः पापात्मा विरलमपि संगं न लभते,वियोगं प्राप्नोति क्षणमपि न तैः पुण्यसहितः। अतः किंचित्पापं सुकृतमपि शंके स्वविषये, भवद्भिः संसर्गः कथमथ कथं चैष विरहः? ॥५०॥"ता अंसुपुण्णनयणो पुणो पुणो नमिय सूरिणो मुणिणो । पच्छामुहं नियंतो कुमरो पत्तो सए थाणे ॥५१॥ निच्चं पसंसए धम्मवद्धणं वद्धणं नियपहाणं । परोवयारकारित्तणेण जणयं व तं नियइ ॥५२॥ पुव्वकयदुक्कए सरिय सरिय मिच्छामिदुक्कडं देइ । निंदेइ निययच-

रियं गरिहइ धिजीवियं पुविं ॥ ५३ ॥ निचिगिच्छइ निचअकिचकारिणं वेरिणं पिव कुसंगं । खिसइ पछिनिवासं स मणोरहे कुणइ इय हियए ॥ ५४ ॥ कइया सुतित्थपडिमा मुणिणो संनाणिणो अहं नमिहं ? । मंदरगिरिसिहरसिरं कयाइ जिणमंदिरं दच्छं ॥५५॥ कुसमयमइनिम्महणं जिणपवयणमहं कया निसामिस्सं ? । कइया पूइस्सं धम्मकारिलोयं वरालोयं ॥५६॥ इय फुरियसुद्धभावो जिणधम्मे ठविय निययपरिवारं । जा गमइ दिणे कुमरो ता पत्ता तत्थ पिउपुरिसा ॥५७॥ ते वेत्तिणा विमुक्का काउं उचियं कुमारमिणमाहु । रायसुय ! तुज्झ चरियं चित्तकरं सुणिय देवेण ॥५८॥ तुम्हाणयणनिमित्तं अम्हे इह पेसिया तओ तुब्भे । लहु एह नियनयरे नीईए कुणइ नियरज्जं ॥५९॥ तो वद्धणमंतेणं पल्लीं सुत्थं करेवि कुमरवरो । जणयपुरिसेहिं सहिओ सपरियणो सुरपुरं पत्तो ॥ ६० ॥ पणओ पिउचलणेसुं गाढं आलिंगिऊण हरिसेण । भणिओ पिउणा मिउणा वयणेणं वच्छ ! तुह कुसलं ॥ ६१ ॥ अम्हच्चिय पुन्नेहिं जाओसि तमिण्हि एव धम्मपरो । अइदुक्करं च पयईइ रुंभणं ते कयं किहणु ? ॥ ६२ ॥ यतः—उब्भडसडाकडप्पो हरीवि रुंभई करीवि गुरुदप्पो । गुरुपत्तिहिं नहु तीरइ पयईए रुंभणं काउं ॥६३॥ आह कुमारो तायप्पसायओ कुसलमत्थि मज्झ सया । गुरुपायपसाएणं पयईए रुंभणं जायं ॥६४॥ पिउणा पुट्ठो सवं नियवुत्तंतं कहेइ जा कुमरो । ता सिरिसमंतभद्दा सूरिवरिट्ठा तहिं पत्ता ॥६५॥ अह नवरुउहराया विक्कमसेणो अमंदआणंदो । सारपरिवारसहिया पत्ता गुरुचरणनमणकरा ॥६६॥ हरिसंसुपुन्ननयणो विगसियवयणो पसन्नमणकरणो । भत्तिबहुमाणसारो थुणेइ गुरुणो इय कुमारो ॥ ६७ ॥ तथाहि—"संकल्पोऽपि न कल्पतल्पजतरौ चिंता न चिंतामणौ, कामः कोऽपि न कामकुंभविषयो नो चित्रकृचित्रकः। मन्ये कांचनपुरुषोऽपि पुरुषो नो कामधेनौ मनो, यत्रो श्री-

मुनिराजपादकमलद्वंद्वं मया वंदितम् ॥६८॥ अंहःसंहति शु लुंपति धृतिं धत्ते विधत्ते शिवं, चारित्रं चिनुते निहंति कुमतिं भिन भृशं दुर्गतिम्। पुष्णात्यद्भुतशुद्धबुद्धिमहिमाः श्रीधर्मकीर्तिप्रभाः, श्रीवाचंयमराज! भव्यभविनां पादप्र ादस्तव ॥ ६९ ॥" तयणु–निवकुमरप्प ाए सयलपरिसाइ गरुयहरिसाए। दुंदुहिउद्दामसरं इय धम्मकहं कहइ भयवं ॥७०॥ "भो भो भवण्णवे इह निमज्जमाणाण सव्वसत्ताणं। नित्थारणे समत्थो धम्मुचियऽतुच्छबोहित्थो ॥७१॥ सो दुविहो मुणिगिहिधम्मभेयओ तत्थ समणधम्मो य। सावज्जकज्जवज्जणनिरवज्जासेवणपहाणो ॥ ७२ ॥ इच्छा मिच्छा तहकार आवस्सहिया तहय निसीहियया। पडिपुच्छ छंदण निमंतणा य उव ंपया दसमी ॥७३॥ इय सामायारिपरो (प्र० तहक्कारो आवस्सिया य निसीहिया। आपुच्छणा य पडिपुच्छ छंदणा य निमंतणा ॥७४॥ उव ंपया य ंमं गामकुलाइसु ममत्तपरिहारो। अप्पडिबंधविहारो आहारोवहिपमुहसं द्धी ॥७५॥ गुरुभत्ती तवसत्ती निद्दं-कियनिचकिच्चअणुरत्ती। अत्थमियविसयतत्ती सव्वत्थाणुचियविणियत्ती ॥ ७६ ॥ बालाईपडियरणं उव ग्ग-परीसहाण निरु हणं। एमाइ समणधम्मो सिग्घं सिवलच्छि ंजणगो ॥ ७७ ॥ एयअसत्ताणं पुण सत्ताणं बीयओ दुवालसहा। होइ गिहीणं धम्मो कमेण सिवदायगो सोऽवि ॥७८॥" तो संवेगोवगओ पिउणोऽणुन्नविय कहवि पवज्जं। केवल नाणिसमीवे विक्कमसेणो पवज्जेइ ॥७९॥ गुरुणा सह विहरंतो पंचविहायारहारकयसोहो। मिच्छामि दुक्कडं मुहु दिंतो थोवेऽवि अवराहे ॥८०॥ निब्भग्गमयणसेणो विक्कमसेणो मुणी समयविहिणा। परिचइऊणं पाणे पाणयकप्पे रो जाओ ॥८१॥ तो चविउं महिलाए पुरीइ नमिणो निवस्स संजाओ। पुत्तो जसोहराए पियाइ सो वारिसेणुत्ति ॥८२॥ बहुनिवइतणयसहिओ सिरि-

पासजिणिंदस्स पास गहियवओ। होउं गणहरदेवो सिद्धिं पत्तो धुयकिलेसो ॥८२॥ एवं विक्रमसेनवृत्तमतुलं संचिंत्य चित्ते चिरं, पश्चात्तापहुताशभासुरशिखानिर्दग्धपापद्रुमाः। निःशेषार्जितकर्म्मजालहतये मोक्षैकबद्धस्पृहा, मिथ्यादुष्कृतसावधानमनसो भव्या! भवंतु स्फुटम् ॥८३॥ इति मिथ्यादुष्कृते विक्रमसेनकुमारदृष्टांतः ॥ २६ ॥ एवमालोचितप्रतिक्रांतः कायोत्सर्गप्रायश्चित्तेन पुनरात्मविशुद्ध्यर्थं प्रतिक्रमणविशेषरूपां अष्टमीसंपदमाह–तस्स उत्तरीकरणेणं ( पायच्छित्तकरणेणं ) विसोहीकरणेणं विसल्लीकरणेणं पावाणं कम्माणं निग्घायणट्ठाए ठामि काउस्सग्गं ॥ तस्स–आलोचनाप्रतिक्रमणादिनाऽशुद्धातिचारस्योत्तरीकरणादिना ठामि काउस्सग्गमिति योगः, यद्वा तस्सत्ति प्राकृतत्वात्तेषां गमनादिप्रभवानां पापानां कर्म्मणां निर्घातनार्थं कायोत्सर्गं करोमीति योगः, यद्वाष्यं–तेसिं गमागमाईसमुत्थपावाण घायणनिमित्तं। उस्सगे ठामि अहं उत्तरकरणाइहेऊहिं ॥ १ ॥ (३८३) तत्रानुत्तरस्योत्तरस्य करणं पुनः संस्कारद्वारेणोपरिकरणं शलाकादिशोधितदेहव्रणादेः पिंडीबंधप्रलेपादिवत् उत्तरीकरणं तेन हेतुना, तदर्थमित्यर्थः, 'अवराहसल्लपभवो भाववणो होइ नायव्वो' इति वचनात् तस्यालोचनाप्रतिक्रमणादिना शोधितस्य विराधनाप्रकाराख्यभावव्रणस्य संरोहणार्थं प्रलेपादिकल्पं ध्यानमौनांगचेष्टानिवृत्त्यादि करोमि १, एतच्च प्रायः प्रायश्चित्तकरणेन कार्यकारि स्यात्, प्रायश्चित्तं च यथा द्रव्यव्रणे कृतेऽपि प्रलेपादौ लावणिकाद्युद्भाव्यदोषप्रसंगभीत्या रक्तचंदननीलितिलकादि क्रियते तथाऽत्राप्यनवस्थाद्यनुत्पत्तये पंचविंशतिउच्छ्वासादिना कायोत्सर्गाख्यं पंचमं प्रायश्चित्तं, भणितं च–"तस्स य पायच्छित्तं जम्मग्गविऊ गुरू उवइसंति। तं तं आयरियव्वं अणवत्थपसंगभीएणं ॥१॥ इक्केण कयमकज्जं० गाहा, तथा–करोत्यादौ तावत् सघृणहृदयः किंचिदशुभं, द्वितीयं सापेक्षो विमृशति कार्यं च कुरुते। तृतीयं निश्शंको विगतघृणमन्यत् प्रकुरुते, ततः पापाभ्यासात् सततम-

शुभेषु प्ररमते ॥१॥ निरुक्तोऽर्थस्त्वयं-पावं छिंदइ जम्हा पायच्छित्तं तु भन्नए तेण । पाएण वावि चित्तं जीवमओ वावि सोहेइ ॥१॥ तेण पायच्छित्तं आर्षत्वात् कल्काद्यंबुना प्रक्षालनात् भूतभाविपूत्यादिशुद्धिः क्रियते, तथा अत्रापि निंदागर्हादिनाऽतिचारमलक्षालनतः आत्मनो नैर्मल्यकरणं तेन हेतुना,न विशोधिः कृताऽपि विशल्यत्वं विना किंचिदित्याह-विसोहीकरणेणं विसल्लीकरणेणं, यथा दीपांकूरकिलीकापातादि विना धाव्यमानमपि व्रणादि न प्रसरन् निरोद्धुं शक्यते तथेदमपि भावतः परिकुंचितं सनिदानमिथ्याभावं वाऽऽलोचनानिंदादिविधानं पूत्यादिकल्पदुर्लभबोधित्वादि कृत्वा दीर्घसंसारतया प्रसरद्दुर्निवार्यमित्यविशल्यस्य विशल्यस्य करणं विशल्यीकरणं, मायादिशल्यानुद्धृत्येत्यर्थः, उक्तं च-"ता उद्धरंति गारवरहिया मूलं पुणब्भवलयाणं । मिच्छादंसणसल्लं मायासल्लं नियाणं च ॥१॥" तेन हेतुना किं ?-पावेत्यादि, पापानां-अशुभानां अशुभबंधहेतूनां कर्म्मणां प्राणाक्रमणाभिहननादिक्रियालक्षणानां तत्कार्याणां वा ज्ञानावरणीयादीनां निर्घातनार्थ-विनिवृत्त्यर्थं चिलातिपुत्रवत्तिष्ठामि, धातूनामनेकार्थत्वात् करोमि कायोत्सर्गं, 'ठिओ निसन्नो निवन्नो वे'ति वचनादूर्ध्वस्थित्याद्यासनविशेषं,उक्तं च-"प्रलंबितभुजद्वंद्वमूर्ध्वस्थस्यासितस्य वा । स्थानं कायानपेक्षं यत्, कायोत्सर्गः प्रकीर्तितः ॥१॥ वागंगव्यापारनिषेधेनाशुभकर्म्मच्छित्त्यै दुष्टचेष्टितस्य कायस्य त्यागं करोमीत्यर्थः,यदाह-"काउस्सग्गे जह सुट्ठियस्स भज्जंति अंगमंगाइं । इअ भिंजंति सुविहिया अट्ठविहं कम्मसंघायं ॥१॥ जह करगओ निकिंतइ दारुं इंतो पुणोवि वच्चंतो । इअ कत्तंति सुविहिया काउस्सग्गेण कम्माइं ॥२॥ पूर्वप्रसूचितचिलातिपुत्रचरित्रमिदम्—

रायगिहे भद्दाए धणसिट्ठिस्सासि सुंसुमा दुहिया । पणसुयअणुजाया तीइ बालहारो चिलाइसुओ ॥१॥ बहवे बहुवेराइं जणे कुणंतो धणेण सो णयरा । नयराइआउ निकासिओ गओ सीहगुहपल्लिं ॥२॥ तहिं पल्लिवइंमि मए जाओ पल्लीवई कयाइ तओ ।

चोरे भणइ जह धणो रायगिहे अत्थि भूरिधणो ॥३॥ धूया य सुंसुमा से सा मज्झ धणं तुहंति वुत्तु गओ। तेहिं समं रायगिहे रायगिहे सयललच्छीणं ॥४॥ ओसोवणिं पउंजिय जा पविसइ धणगिहे धणो ताव। पणसुअसहिओ नट्ठो मुट्ठो से तक्करेहिं घरो ॥५॥ तह करगइ निच्चिसो निस्सिंसो गहियकमलनिसिंसो। तं सुंसुमं चिलाइ व लाउ गओ भणिय इय सद्दं ॥६॥ जो अन्नमाउदुद्धं पाउमणो एउ सो इहं सुहडो। सधणं हरिय धणसुअं एसो गच्छइ चिलाइसुओ ॥७॥ अह आणेह सुयं मे हरिअधणं वोत्ति भणिय पुररक्खे। पुत्तेहिं तलवरेहि य सह तप्पुट्ठीइ जाइ धणो ॥८॥ इय पीयं इय वुत्थं इय भुत्तं सुत्तमित्ति भणिरेहिं। पइएहिं लहु नीया चोरासन्नं तलवरा से ॥९॥ अह हण अह हण अह गिण्ह २ सोउं तु तग्गिरं चोरा। मिल्हिअ धणं पलाणा सव्वस्सवि वल्लहं जीअं ॥१०॥ तं गहिय धणं विउलं वलिआ आरक्खगा तओ झत्ति। जं होइ सिद्धकज्जो सव्वोऽविहु अन्नहामइओ ॥११॥ तरुणो लया थलं जलमन्नंपिहु सुंसुमामयं पस्सं। पीयकणउव्व कणयं चलिओ पुरओ धणो ससुओ ॥१२॥ अह आसन्नंमि धणे मा हवउ इमा इमस्स- वित्ति वुद्धीए। छित्तु सिरं से गहिअं गओ निअंतो चिलाइसुओ ॥१३॥ तो सुंसुमाकबंधं दट्ठु धणो विलवए बहुं ससुओ। नयणं- जलीहिं दिंतो तीइ जलं वंऽसुपूरेण ॥१४॥ हा सुअणवच्छले! वच्छि! उच्छंगं मोइओ सुवच्छल्लो। काहं नियवच्छीए इअ वंछा आसि मह वच्छे! ॥१५॥ हा जइ न दुट्ठु बुद्धिं अकरिस्सं ता कयाइ बहुधणओ। निअपुत्तिममोइस्सं ता कह जायत्ति अमई मे ॥१६॥ इअ सोगसंकुकीलिअहियओ सो झूरिउं पडिनियत्तो। पत्तो रण्णं जं जिणगिहं व बहुसावयाइण्णं ॥१७॥ चिंतइ सव्वस्सरवओ कह? कह व मया सुया य पाणपिआ?। कह आवया व ससुअस्स मह हा हा विलसिअं विहिणो ॥१८॥ सो असमत्थुण्हतण्हा- मज्झण्हिअतावताविओ पत्तो। संतविअपणग्गितवो तो रायगिहं व रायगिहं ॥ १९ ॥ अह तत्थ समोसरिअं वीरजिणं नमिय

विन्नवेइ धणो। पहू! केण कम्मणा एअमावयं सुंसुमा पत्ता? ॥२०॥ भणइ पहू आसि पुरे खिइप्पइट्ठंमि जण्णदेवदिओ। पंडि-
अमाणी निंदइ जिणं च जिणसासणं च बहुं ॥२१॥ अह तं पवोहखुड्डो असहंतो सुत्थियायरियसीसो। गुरुणा वारिज्जंतोवि
उवट्ठिओ तस्स वाएण ॥२२॥ जो जेण जिप्पई सो तस्सीसो विउं इय पइन्नं। भण किंचित्ति अखुड्डेण तो खुड्डेणं भणइ इमो ॥२३॥
नत्थि धुवं सव्वन्नू इति पक्षः, पमाणपंचगअगोयरत्तेण इति हेतुः। जं जं पमाअगिज्झं तं तमसंतं इति व्याप्तिः खपुप्फं व इति
दृष्टांतः ॥२५॥ उवलब्भइ न पमाहिं सव्वन्नू इत्युपनयः, तेण नत्थि नूणं सो इति अवसायः। अथ दोषोद्धारः—एस अदूसो पक्खो
लोयविरुद्धाइरहिओ जं ॥ २५ ॥ हेऊवि असिद्धाईरहिओ देसाइअंतरेवि जओ। नत्थि परो सव्वन्नू इति नासिद्धः, तहऽणेण न
सिज्झइ विरुद्धं इति न विरुद्धः ॥२६॥ तह तस्स नत्थि सत्ता अविय सदा अणुवलब्भ णस्स इति नानैकांतिकः। सच्चमयाच्चिय
वित्थरदिट्ठंतोवणयअवसाया ॥२७॥ तह नहु पच्चक्खेणं उवलब्भइ इत्थ कोइ सव्वन्नू। जं सद्दरूवरसगंधफासरूवो न इट्ठो सो ॥२८॥
ता सद्देण न सुव्वइ भंभाइसरुव्व सो उ चक्खूहिं। तह रूवव्व न दीसइ आसाइज्जइ नहु रसुव्व ॥२९॥ गंधव्व न जिंघिज्जइ चेइ-
ज्जइ नेव धूलिफरिसुव्व। इअ पच्चक्खअविसओ अणुमाणेणवि न सो गिज्झो ॥३०॥ जं हेउभावओ तं नत्थि अ सव्वन्नुसाहगो
हेऊ। धुत्तकयऽन्नन्नविरुद्धआगमो साहइ न एअं ॥ ३१ ॥ कह सारिस्सअभावा पहवइ उवमावि एयसिद्धिकए। अत्थापत्तीवि न
अत्थसाहगा गुणअदंसणओ ॥ ३२ ॥ इअ पंचपमाईओ जिणो अभावप्पमाणविसयगओ। तदभावे किं जिणसासणंति चिंतिय!
पइण्णा मे ॥३३॥ बुल्लेइ चि ओ जन्नदेव! इह किं तया न सव्वन्नू। दिट्ठो उय अन्नेहिवि? जइ भवया तो नणु सदोसो ॥३४॥
जं माउविवाहपियामहादि दिट्ठा न ते न ते जाया इति विरुद्धः। तह दूरदेससंठिअगिरिनगराई न किं संति?॥३५॥ इय सव्वन्नूवि

सया अत्थि विदेहेसु इत्यनैकांतिको अह न दिट्ठो सो। अन्नेहिवि नणु एवं विऊ तुमं चेव सवन्नू ॥३६॥ इय तुह सज्झनिरासे निरस्सिआ चेव तुह पइण्णाई। तो सिद्धो सवन्नू अत्थि धुवं तत्थ पच्चक्खो ॥३७॥ अणुमेओवि इमो जं अणुभावो जोइसोसहाईणं। पयडो न होइ तं विणु जह धूमधयं विणा धूमो ॥३८॥ इय जुत्तिजुत्तमुत्तो दिओ जिओ गाहिओ य जइणवयं। खुड्डेण तओ सासणदेवीइ थिरीकओ एवं ॥३९॥ भो भो मुक्ख! पच्चक्खसक्खिणिं दुक्खलक्खखयकरणिं। पत्तं दिक्खमसद्धाणनाणाओ माऽवमाणेसु ॥४०॥ तो जाओ चरणरओ सो तवनिरओवि विहियजाइमओ। निंदइ वत्थंगमलं सुदुच्चया पुवपगई जं ॥४१॥ वंजुलसंगा व अही नगरा नगरासया जणा जाया। सग्गापवग्गजायाणुलग्गया तस्स संसग्गा ॥४२॥ अह जन्नदेवदइया अणुरइया पुण गिहागमणहेउं। बहुजोगकम्मुणा तस्स कम्मणं देइ पारणए ॥४३॥ जिज्झंतो कम्मणकम्मुणाऽमुणा किण्हपक्ख इव चंदो। समओ मुणी लहु गओ पढमदिवं तरणिबिंबं व ॥४४॥ तो चइअ जन्नदेवो देवो जाइमयऽतुच्छमललेवो। तुह दासिचिलाइसुओ जाओ एसो बहुअदोसो ॥ ४५ ॥ तह जन्नदेवमरणा गयसरणा सिरिविघायसंसरणा। जायाऽणुतावओ सा जाया से संजई जाया ॥४६॥ णालोइअपडिकंता कालं कत्ताऽऽदिमं दिवं पत्ता। तवसो नत्थि दुरप्पं दुस्सज्झं नय दुरारज्झं ॥४७॥ तो सा चइअ सुहम्मा चइयसुहम्मा इमा तुमं जाया। भज्जाए भद्दाए धूआ धूआखिलसुहोहा ॥ ४८॥ अह रिसिवहुत्थपावेण तेण पत्ता इमं नणु अवत्थं। धण! तुह दुहिया दुहिया जाया भमिही भवकडिल्ले ॥४९॥ इय सोउ भउविग्गो गहिअ जिणंते वयं सुवेरग्गा। अच्छरविहिय-सुरंगे सो धणसाहू गओ सग्गे ॥५०॥ अह सो चिलाइपुत्तो मुहुं मुहुं सुंसुमामुहं पस्सं। अमुणिअपरिस्समो जाव जाइ दक्खिणदिसं कंपि ॥५१॥ ता पिच्छिय विच्छायं तं उविग्गो मणंमि सज्झायं। छायातरुं व पिच्छइ संतावहरं मुणिं मग्गे ॥५२॥ भणइ य धम्मं

थोवक्खरेहिं मह कहसु अन्नहा तुहवि। सकिवाणेण किवाणेण छिंदिहं सिरमिमीएव्व ॥५३॥ सालिव बोहिबीयं खित्तं इह पल्लले
व वड्ढिहिइ। इय मुणिभणियं उवसमविवेयसंवर इह विहेया ॥ ५४ ॥ चारणमुणी लहु गओ गयणे गरुडुव्व तो इमस्स इमे।
मंतुव परावत्तंतस्सुल्लसिओ इमो अत्थो॥ ५५ ॥ कोहाईण उवसमो खममउ पज्जवविमुत्तिओ किच्चो। दव्वचयणं विवेओ स हवउ
असिए य सिरचाया ॥ ५६ ॥ मणकरणाण निवित्तिं विराएहिं संवरो करेमि तया। इय चिंतिरो अविचलं काउस्सग्गा इमो ठाइ
॥५७॥ सरुहिरमंगंति तओ व कीडीहिं कयं घुणेहिं दारुव। कयपावकम्मघाओ दिवं गओ सड्ढदुदिणं सो ॥५८॥ जो तिहिं पएहिं
सम्मं समभिगओ संजमं समभिरूढो। उवसमविवेयसंवर चिलाइपुत्तं नमंसामि ॥ ५९ ॥ अहिसरिया पाएहिं सोणियगंधेण जस्स
कीडीओ। खाइंति उत्तमंगं तं दुक्करकारयं वंदे ॥६०॥ धीरो चिलाइपुत्तो मूइंगलिआहिं चालिणिव्व कओ। जो तहवि खज्जमाणो
पडिवन्नो उत्तमं अट्ठं ॥६१॥ अड्ढाइज्जेहिं राइंदियेहिं पत्तं चिलाइपुत्तेण। देविंदामरभवणं अच्छरगणसंकुलं रम्मं ॥६२॥ श्रुत्वा चिला-
तेस्तनयस्य कायोत्सर्गादहो पातककर्म्मघातम्। कुर्वीत चेष्टाभिभवस्वरूपे, द्विधापि तस्मिन् करणाय यत्नम् ॥६३॥ **इति कायोत्स-
र्गात् पापनिर्घाते चिलातिपुत्रचरित्रम्** ॥ किं सर्वथा कायोत्सर्गं करोति?, नेत्याह—'अन्नत्थ ऊससिएण'मित्यादि, एतदर्थ-
श्चैत्यस्तवदण्डकेऽभिधास्यते, 'इरिउस्सग्गपमाणं पणवीसुस्सासे'ति वचनात् पंचविंशत्युच्छ्वासपूरणार्थं 'चंदेसु निम्मलयरा'इत्यंतं
चतुर्विंशतिस्तवं मनसा विचिंत्य नमो अरिहंताणंति भणन् कायोत्सर्गं पारयित्वा पुनश्चतुर्विंशतिस्तवं सकलं वाचोचरति। एवमी-
र्यापथिकीं प्रतिक्रम्य क्षमाश्रमणं दत्त्वा इच्छाकारेण संदिसह भगवन्! चैत्यवंदन करुं?, इच्छंति भणित्वा नमस्कारांश्च शक्रस्तवा-
दिभिश्चैत्यवंदनां विधत्ते, यदागमः—"सक्कत्थयाइयं चेइयवंदणं'ति, तत्र शक्रस्तवसंपदासंख्यां आद्यपदानि च प्रतिपिपादयिषुराह—

दु१ति२ चउ३ पण४ पण५ पण६ दु७ चउ८ ति९ पयसक्कत्थयसंपयाइपया।
न १ आइग२ पुरिसो ३ लोगु ४ अभय ५ धम्म६ प्प७ जिण८ सव्वं ९ ॥ ३४ ॥

अक्षरघटना प्रागुक्तानुसारेण कार्या, भावार्थः पुनरयम्-नमोत्थुणं अरहंताणमित्याद्यपदा पदद्वयप्रमाणा प्रथमा संपत् १, आइगराणमित्यादिपदत्रयनिष्पन्ना द्वितीया २ पुरिसुत्तमाणमित्यादिपदचतुष्कचर्चिता तृतीया ३ लोगुत्तमाणमित्यादिपंचपदपूरिता चतुर्थी ४ अभयदयाणमित्यादिपदपंचकपरिमाणा पंचमी ५ धम्मदयाणमित्यादिपदपंचकनिष्पन्ना षष्ठी६ अप्पडिहतेत्यादिपदद्वय-निर्वर्तिता सप्तमी ७ जिणाणमित्यादिपदचतुष्टयघटिताऽष्टमी ८ सव्वन्नूणमित्याद्यालापकत्रिकपरिकलिता जियभयाणमिति पर्यंता नवमी संपत् ९॥ अथास्यैव वर्णादिसंख्यार्थं गाथापूर्वार्द्धमाह—

दो सगनउआ वण्णा नव संपय पय तित्तीस सक्कत्थए।

द्वे शते सप्तनवत्यधिके वर्णाः-अक्षराणि शक्रस्तवदण्डके इति योगः, सव्वे तिविहेण वंदामीति यावत्, एतदंतस्यैव वर्णगण-स्थापना चेयं—

| | |
|---|---|
| २९७ | शक्र० |
| २३० | चैत्य० |
| ४९० | नाम० |
| ४३८ | श्रुत० |
| ३४६ | सिद्ध० |

नस्य वृद्धसंप्रदायेन प्रणिपातदण्डकतया रूढत्वात्, तथा च चैत्यवंदनाचूर्णौ तिविहेण वंदा-मीत्येतदंतं व्याख्याय भणितं 'सक्कत्थयविवरणं सम्मत्तं', श्रीलघुभाष्येऽप्युक्तम्-दो दो चउ चउ तिसया सगनवई तीस नवइ अब्भहिया। अडतीसा छायाला दंडेसु जहक्कमं वण्णा ॥१॥ अस्यार्थः स्थापनातोऽवसेयः-तथा नव संपदः पदानि च त्रयस्त्रिंशत् शक्रस्तवे। अथ सूत्रं व्याख्यायते, तच्चेदम्-नमोत्थुणं अरहंताणं भगवंताणमित्यादि, इह नम इति नमस्कार-

वाचकं पदं, नमस्कारश्च द्रव्यसंकोचभावसंकोचभेदाद् द्विधा, तत्र द्रव्यसंकोचनं शिरोनमनांजलिबंधपादविन्यासादि, भावसंकोचनं तु प्रीतिप्रणिधानादिविधानतो विशुद्धमनसा नियोगः, एतेन नमस्कारचातुर्विध्यमुक्तं, तथाहि–द्रव्यतो नामैको नमस्कारो न भावतो निह्नवद्रव्यलिङ्गिपालकादीनामनुपयुक्तसम्यग्दृष्ट्यादीनामपि च 'अनुपयोगो द्रव्य'मिति वचनात्१ अन्यस्तु भावतो नमस्कारो न द्रव्यतः अनुत्तरसुरादीनां ग्लानाद्युपयुक्तसम्यग्दृष्ट्यादीनां च २ द्रव्यतो भावतश्च नमस्कारो यथाविधि शिरोनमनादिक्रियानिष्ठोपयुक्तसम्यग्दृष्ट्यादीनामेव३ नो द्रव्यतो नो भावतश्च कपिलादीनामिव नमस्काराभाव एव ४, उक्तं श्रीभद्रबाहुस्वामिना–निण्हाइ दव्व भावोवउत्त जं कुज्ज सम्मदिट्ठी उ। नेवाइयं पदं दवभावसंकोयण पयत्थो ॥१॥" अस्तु–भवत्विति प्रार्थनार्था क्रिया, दुरापो हि परमप्रकर्षप्राप्तो भावनमस्कार इत्थमाशंसाबीजाधानेन साध्यते इति ज्ञापनार्थं, आह च–"अत्थुत्ति पत्थणा दुल्लहो उ उक्कोसभावनमुक्कारो। लब्भइ बीयाहाणा इय आसंसाइ तं नु भवे ॥ १ ॥" भावनमस्कारप्रकर्षवांश्च वीतरागो 'नमस्तीर्थाये'तिनिराशंसमेवेति भणति, उपशांतमोहादौ हि पूजाकारके अविकलाप्तोपदेशपरिपालनरूपप्रतिपत्त्यभिधानचतुर्थपूजायाश्च भावात्, भणितं च–"बिंति अणासंसंचिय तित्थस्स नमोत्ति उवसमजिणाई। अविगलआणापालणपहाणपडिवत्तिपूयपरा ॥१॥" यदुक्तमुत्तराध्ययनेषु–अरहंता तित्थयरा, तेसिं चेव भत्ती कायव्वा, सा पूआवंदणाईहिं भवइ, पूअंमि पुप्फामिसथुईपडिवत्तिभेयओ चउविहंपि जहासत्तीए कुज्जा"तथाऽन्यत्र "पुष्पामिषस्तुतिप्रतिपत्तिपूजानां यथोत्तरं प्राधान्यं" णमितिवाक्यालंकारे, केभ्यः?–'अरहंताणं' 'चतुर्थ्याः षष्ठी'ति प्राकृतवशेनात्र षष्ठी, नमोऽर्हद्भ्यः सुरासुरादिकृताशोकवृक्षाद्यष्टमहाप्रातिहार्यरूपधर्म्मध्वजधर्म्मचक्राद्यतिशयस्वरूपत्रिभुवनातिशायिमहिमार्हेभ्यः, उक्तं च–"जिणअट्ठपाडिहेरा असोगतरू चमर कुसुम जलवुट्ठी। दिव्वझुणी

सिंहासण छत्तत्तय भेरि भावलयं ॥ १ ॥ तथा-"झय१ चक्क२ पउम३ सुरकोडि४ सुमनाइं५ चउमुहंगय६ तिवप्पा ७। रिउ ८ विसय९ अंबु१० कंटय११ पवणऽ कूलकज्ज १२ नहवठिई १३ ॥१॥" यद्वा मर्त्यादिविहितवंदनाद्यर्हेभ्यः, भणितं च-"अरहंति वंदणनमंसणाणि अरहंति पूअसक्कारं। सिद्धिगमणमरिहंति जे ते अरिहंत तेसिं नमो ॥१॥" अर्हांतेभ्यो वा-सहजातिशयादिसर्वोत्तमगुणसंपूर्णतया सर्वान्यस्तवनादियोग्यानां मध्ये प्रधानेभ्यः, अभ्यधायि च-"अरहा जुग्गा उचियत्ति सुगुणपुण्णत्तणा थयाईणं। तेसुवि अंता पगरिसपत्ता जमिहेरिसा नत्ते ॥१॥ अथवा 'अरहद्भ्यः' सिद्धिगतावप्यनंतज्ञानमयत्वात् आत्मस्वभावमत्यजद्भ्यो 'रह त्याग' इतिवचनाद्, अनेकार्थत्वाद्वा धातूनां अरहद्भ्यः, भणितं च-"न रहंति न चयंति णाणाई सिवेवि तेऽवि अरहंता। न रहंति न चिट्ठंति व भवंमि जं तेण अरहंता ॥५॥ अरहोंतेभ्यो वा, सर्वत्र सर्वथा सर्वदा सर्वतोऽप्यपगतप्रच्छन्नभावाभावज्ञानमयेभ्यः स्तवनीयत्वाद्, अभाणि च-नत्थि व रहो य छन्नं अंतो नासोत्ति जेसिं नाणस्स। ते अरहंता तेसिं नाणाइमयाण होउ नमो ॥१॥" अरहंतेभ्यो वा, यदाह-'नत्थि व रहो उ छन्नं अंतो मज्झं च सयलवत्थूणं। परअवरभागवेइत्तणेण जेसि अरहंता ते ॥१॥" एवं अरथांतेभ्यः, रथाद्युपलक्षितवाहनांतसंगरहितेभ्यः, भणितं च-"संगुवलक्खणभूओ रहो अ जाणं न जेसि अंतो य। तो सो जराइउवलक्खणं तु ते हुंति अरहंता ॥१॥ अरभमानेभ्यो वा अतुच्छस्वच्छत्वादिभानमयत्वेन राभसिकवृत्त्यादिनिवृत्तेभ्यः, इत्यादिव्याख्यांतराण्यपि भावनीयानि, अरिहंताणमिति वा पाठः, इंद्रियविषयाद्यरिहंतृभ्यः 'इंदियविसयकसाए परीसहे वेयणा य उवसग्गे। रागद्दोसे कम्मे अरी हणंतीति अरिहंता ॥ १ ॥" अरिणा वा-धर्मचक्रेण भांत्यरिभांतस्तेभ्यः, अरिमनु(पदो)पलक्षिताखिलाहितहेतिसंहतिहानिकृद्भ्यो वा, आह च-"अरिणा व धम्मचक्केण भंति सोहंति ते उ अरिहंता। असिउवलक्खण-

सत्थे जहंति च चयंति अरहंता ॥१॥ अरुहंताणं ति वा पाठः, न रोहंति दग्धकर्म्मबीजत्वात् पुनः संसारपल्वले न जायंत इत्यरोहंता, उक्तं च–"दग्धे बीजे यथाऽत्यंतं, प्रादुर्भवति नाङ्कुरः। कर्म्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥" अरुरुपलक्षितपीडादिकृद्रोगादितत्कारणभूतकर्म्मादि वा घ्नंतीति वा अरुहंतृभ्यः अरुंधद्भ्यो वा, चरणाभावे न पुनर्भवोऽवरोधाभावादित्यादि, बहुवचनं क्षेत्रकालभेदेनार्हद्बहुत्वख्यापनार्थं, एते च नामाद्यनेकधेति नामार्हत्प्रतिपत्त्यर्थमाह–'भगवंताणं' भगः–ऐश्वर्यादिः षड्विधो येषां ते भगवंतस्तेभ्यः, भणितं च–"ईसरिअ जसो रूवं सिरी य धम्मो तहा पयत्तो य। एए जेसि पगट्ठा ते भगवंते नमो तेसिं ॥१॥" तत्र–"ईसरियमिह पहुत्तं ससुरासुरमणुयजीवलोगस्स। तिहुयणगिज्झो चंदुज्जलो जसो रूवमइरम्मं ॥२॥" यदागमः–"सव्वसुरा जइ रूवं अंगुट्ठपमाणयं विउविज्जा। जिणपायंगुट्ठं पइ न सोहए तं जहिंगालो ॥३॥ बहिलच्छी ओसरणाइ अंतरंगा उ केवलाईआ। धम्मो फलरूवो जं न जिणत्ता धम्मफलमन्नं ॥ ४ ॥ धम्मुज्जमो पयत्तो पयडोच्चिअ सो जिणाण संपुन्नो। करसंठिएवि मुक्खे परोपयारिक्कनिरयाणं ॥५॥ अत्र संप्रदायः—

एकदा समवसार्षीत्, प्रतिष्ठानपुरे प्रभुः। श्रीसुव्रतजिनो विश्वगेयोज्ज्वलयशोभरः॥१॥ स ज्ञानचक्षुषाऽद्राक्षीन्, मित्रं प्राग्जन्मनः स्वकम्। भृगुकच्छपुरेशस्य, बोधयोग्यं तुरंगमम् ॥२॥ ततोऽमितगतिर्भव्यराजीराजीवभास्करः। प्रतस्थे भुवनस्वामी, भृगुकच्छपुरं प्रति ॥३॥ आक्रम्यैकनिशा षष्टियोजनीं भृगुकच्छके। प्राप कोरंटकोद्यानं, कोटिसंख्यसुरैर्वृतः॥४॥ तत्र योजनमात्रे च, क्षेत्रे वायुकुमारकैः। शोधिते समवसृतौ, रचितायां सुरासुरैः॥ ५ ॥ राजमानो महाप्रातिहार्यैर्वर्यैः सदाऽष्टभिः। सिंहासनमलंचक्रे, धर्मचक्री भवांतकृत् ॥६॥ गत्वाऽथोद्यानपालेन, तत्पुरेशाय सत्वरम्। जिनागमनमानंदाद्व्यवेदि जितशत्रवे ॥७॥ तत्रस्थोऽपि जिनं नत्वा,

दत्त्वाऽसै पारितोपिकम् । तमारुह्य हरिं राजा, गंतुमर्हन्तमभ्यगात् ॥ ८ ॥ मुक्त्वाऽश्वं रूप्यवप्रांतः, प्रविवेश विशां पतिः । भक्त्या समवसृत्यंतर्ववंदे विधिवज्जिनम् ॥ ९ ॥ क्रमेण च निपण्णासु, पर्षत्सु द्वादशस्वपि । दिदेश धर्म्मं विश्वेशः, सुव्रतः सुव्रतो जिनः ॥१०॥ सुधाभां कर्णयोर्जैनीमाकर्ण्याकर्ण्य भारतीम् । उत्कर्णः सोऽभवत् तूर्णं, हयो हर्षाश्रुपूर्णदृक् ॥११॥ प्रभुं पुनः पुनः पश्यन्नुत्पश्यः पशुरप्यसौ । तदन्ते जातया जातिस्मृत्या प्राग्जातिमस्मरत् ॥१२॥ हर्षप्रकर्षतस्तार्क्ष्योऽनिमेपाक्षस्तथोन्मुखः । हेपानिर्घोषमातन्वन्, ययौ मंक्षु जिनांतिकम् ॥१३॥ सोऽनमत्स्वामिनं भूमौ,न्यस्तमौलिर्मुहुर्मुहुः। स्ववाचोवाच दुःखार्तविश्वरक्षक ! रक्ष माम् ॥१४॥ जितशत्रुरथोवाच, नैतच्चित्रीयते विभो ! । यत् तिर्यंचोऽपि बुध्यंते, भारत्या श्रीमदर्हतः॥१५॥ हरेर्हर्षप्रकर्षोऽयं, किंतु तद्हेतुरत्र कः। इत्यादिश मम स्वामिन् !,सर्ववेदी ततोऽवदत् ॥१६॥ राजन् ! जन्मांतरे मित्रमेष वाजी ममाजनि। बोधायास्यागमो मेऽत्र, पूर्वजन्माधुना शृणु ॥१७॥ श्रेष्ठी सागरदत्ताख्यः, स्वमित्रं नैगमाग्रणीः । त्यागी महेश्वरो माहेश्वरश्चोवास तत्पुरे ॥१८॥ शिवस्यायतनं पूर्वं, कारयामास सोऽन्यदा। उपसाधु गतः सार्द्धं, सख्याऽश्रौपीदिदं यथा ॥ १९ ॥ जिनानां मंदिरं कुर्यात्, यो जितांतरवैरिणाम् । स प्रेत्य लभतेऽवश्यं, बोधिरत्नं सुदुर्लभम् ॥ २० ॥ श्रुत्वेत्यकारयत् सोऽथ, सुंदरं जिनमंदिरम् । तत्र चाप्रतिमां जैनीं, प्रतिमां प्रत्यतिष्ठिपत् ॥२१॥ जिनधर्म संसर्गाज्जिनधर्ममतिस्ततः। मिथ्यात्वमथनं सोऽथ, बोधिबीजमुपार्जयत् ॥२२॥ शिवगेहेऽन्यदा शैवैः, सर्पिषा लिंगपूरणे। कृतेऽसौ द्रष्टुमाहूतस्तत्र गत्वा निपेदिवान् ॥ २३ ॥ तदा च तत्र सर्पंतीघृतगंधा घृतेलिकाः। शैवानां चरणन्यासात्, मृताः प्रेक्ष्य सहस्रशः॥ २४ ॥ युक्तमेतद्यतीनां किं, तानेवं सोऽब्रवीन्ननु । भवतां पादपातेन, कीटिकाः कोटिशो मृताः ॥ २५ ॥ क्रुद्धास्तमभ्यधुस्तेऽपि, त्यक्त्वा धर्म्मं क्रमागतः। स्वेंद्रियेभ्योऽपि जिह्रेपि, किं न

धर्म्मं नवं दधत् ॥२६॥ त्वयैवं कुर्वता सर्वे, नूनमद्य सपूर्वजाः। बालिशाश्चक्रिरे तत्ते, अहो ज्ञत्वकुलीनते ॥२७॥ हिंसास्थानेऽत्र धर्मिष्ठ !, त्वमागात् त्वद्विनेश्वरः। न विश्वार्यो ह्यनर्च्यः स्यादुत्तिष्ठ स्वगृहं व्रज ॥२८॥ सुप्रतिष्ठोऽपि तैः श्रेष्ठी, सोऽप्रतिष्ठं प्रजल्पितः। लज्जाम्लानमुखांभोजो, निर्ययौ सपरिच्छदः ॥२९॥ मिथ्यात्वमपि संशीतिगतं सोऽथ दधत्ततः। तद्वाचिकापमानं च, स्मरन्नत्यर्त्ति-संगतः ॥ ३० ॥ बद्ध्वा तिर्यग्भवायुष्कं, स्वायुःशेषमतीत्य च। श्रेष्ठी सागरदत्ताख्यो, मृत्वा तिर्यगजायत ॥ ३१ ॥ भवान् भ्रांत्वाऽथ भूयिष्ठानार्तध्यानाद्भवोदधौ। राजन्नजनि स श्रेष्ठिजीवोऽयं तेऽधुना हयः॥३२॥ यः कारयति जिनानामित्यादि प्राग्भव-श्रुतम्। असन्मुखान्निशम्यासौ, जातिस्मरणमाप्तवान् ॥३३॥ इत्याकर्ण्य नृपो वाजिचरित्रं चित्रमत्कृतः। संवेगाद्गद्गदध्वानः, प्रति-हारं समादिशत् ॥३४॥ द्रागुत्सारय पर्याणमस्मादश्वात्तथा कविम्। इतःप्रभृत्यसौ धर्म्मबांधवो नस्तुरंगराट् ॥ ३५ ॥ सोऽश्वोऽथ स्वामिपार्श्वे चागृहीद्धर्ममगारिणाम्। संन्यासेन विपद्याभूत्, सहस्रारेऽष्टमे सुरः ॥ ३६ ॥ प्राच्यं जन्मावधेर्ज्ञात्वा, भक्त्या चैत्य जिनं स तु। वंदित्वा विधिवन्नाटयं, विदधे विबुधः सुधीः ॥३७॥ कांचनैः कुसुमैस्तीर्थभूमिं तां परिपूज्य च। स्वं प्रकाश्य च तीर्थेशं, पुनर्नत्वा दिवं ययौ ॥ ३८ ॥ अश्वजीवस्ततस्तत्र, स्वःसुखान्यनुभूय सः। च्युत्वाऽत्रैव समुत्पद्य, लप्स्यते पदमव्ययम् ॥३९॥ अथ लोकोपकाराय, भगवान् भृगुकच्छतः। विजहार महीमेनामहीनमहिमा प्रभुः ॥४०॥ भृगुकच्छे तथा स्वामी, स्वां-घ्रिभ्यां यामपावयत्। भुवं तत्र सुराः स्तूपं, स्वर्णरत्नैर्वरैर्व्यधुः॥४१॥ प्रतिमां स्थापयामासुः, तत्र श्रीसुव्रतार्हतः। तीर्थमश्वावबोधं तत्, प्रावर्तत ततश्चिरम् ॥४२॥ सुदृशाममृतांजनमिति सुयशा मुनिसुव्रतः प्रभुः श्रीमान्। सुचिरं दिदेश धर्म्मं परोपकृतये प्रय-तमानः ॥४३॥ इति मुनिसुव्रतस्वामिकथा ॥

एवंविधा एव भगवंतो विवेकिनां स्तोतव्या इत्याभ्यामालापकाभ्यां प्रथमा स्तोतव्यसंपदा उ १, संप्रत्यस्या एव द्वितीयां त्रिपद्या हेतुसंपदमाह–'आइगराण'मित्यादि, केवलज्ञानोत्पत्यनंतरं स्वस्वतीर्थेष्वादौ–प्रथमतः समस्तनीतिचारित्रहेतुश्रुतधर्म करणशीलाः तदर्थप्रणायकत्वेनादिकरास्तेभ्यः, यदागमः–अत्थं भासइ अरिहा सुत्तं गंथंति गणहरा निउणं। सासणस्स हियट्ठाए तओ सुत्तं पवत्तई ॥१॥ (आ० नि०) आदिकरत्वाचामी किंविधा इत्याह–'तित्थयराणं' तीर्थः–प्रवचनाधारश्चतुर्विधः संघः प्रथमगणधरो वा तत्कर्तृभ्यः, यदागमः–"तित्थं भंते! तित्थं तित्थयरे तित्थं?, गोयमा! अरिहा ताव नियमा तित्थगरे तित्थं पुण चाउवण्णे समणसंघे पढमगणहरे व"त्ति, तीर्थकृत्त्वं च एषां नान्योपदेशादित्याह–'सयंसंबुद्धाणं' स्वयं–परोपदेशमंतरेणैव सम्यग्–अविपर्ययेण बुद्धा–ज्ञाततत्त्वाः स्वयंसंबुद्धास्तेभ्यः२ संपद्, एतच्चामीषां न प्राकृतत्वे सति इत्याद्याया एव हेतुविशेषसंपदमाह–'पुरिसोत्तमाण'मित्यादि, पुरुषाणां–विशिष्टसंसारिसत्त्वानां मध्ये तथास्वाभाव्यात् सर्वकालमसाधारणगांभीर्यादिगुणमयोगादुत्तमाः–पूज्याः, संसारेऽपि तीर्थकरजीवानां तथा प्राधान्यात् पुरुषोत्तमास्तेभ्यः, उत्तमत्वमेवोपमानत्रयेण समर्थयति–'पुरिससीहाणं' पुरुषाः कर्मशत्रून् प्रति शूरतया सिंहा इव पुरुषसिंहाः तेभ्यः, यद्वा–"वीहंति न चेव जओ उवसग्गपरीसहाण घोराणं। वियरंति असंकमणा भवंति ततो पुरुषसीह॥१॥"त्ति ३ 'पुरिसवरपुंडरीयाणं' पुरुषा वरपुंडरीकाणीव–प्रधानसितपद्मानीव, यथैतानि पंके जातानि जले प्रवृद्धानि तद्द्वयं विहायोपरि वर्तते तथाऽर्हंतोऽपि कामपंके जाता भोगजले प्रवृद्धास्तद्द्वयं विहाय वर्तंते इति पुरिसवरपुंडरीकाणि, धवलत्वं चैषां सर्वाशुभरहितत्वात् सर्वैश्च शुभानुभावैः सहितत्वात् तेभ्यः३, यद्वा "पुरिसावि जिणा एवं पत्ता वरपुंडरीयउवमाणं। सासाइसुरभिगंधे वहंति वरपुंडरीयत्तं ॥१॥ वट्टंति य उवयारे नरतिरिआणं निरीहपरि-

ण ।। धारिज्जंते सिरसा नरामरेहिं नमिरेहिं ॥२॥" अथवा पुरुषाणां तत्सेवकादीनां वरपुंडरीकमिव वरच्छत्रमिव ये संतापातपवारणसमर्थत्वात् छायाकारणत्वाच्च । पुरिसवरगंधहत्थीणं पुरुषावरगंधहस्तिन इव पुरुषवरहस्तिनस्तेभ्यः४ यद्वा गंधहस्तिगंधेनेव क्षुद्रगजा भज्यंते तद्वदीतिदुर्भिक्षाद्युपद्रवगजाः सपादयोजनशतमध्येऽर्हद्विहारपवनगंधादेव नश्यंति, उक्तं चेत्युपमात्रयात् पुरुषोत्त :, संपन् ३, न चैवं लोकस्यार्वागिति, किंतु लोकस्याप्युत्तमा इति आद्याया एव मान्येनोपयोगसंपदमाह—'लोगुत्तण'मि ादि, लोकस्य—भव्यप्राणिरूपस्य मध्ये उत्त :—सकलकल्याणसम न्नसिद्धिगामित्वलक्षणत भव्यत्वभावात् ऊर्ध्ववर्तित्वात् प्रधानाः लोकोत्तमास्तेभ्यः 'लोगनाहाणं' लोकानां—विशिष्टासन्नसिद्धिकभव्यसत्त्वानां सम्यक्त्वबीजाधानादियोजनेन रागाद्युपद्रवरक्षणेन च योगक्षेम रिणः अलब्धबोधिबीजादिलाभलब्धसद्दर्शनादिगुण मरक्षाविधायिनो नाथा लोके नाथारस्तेभ्यः, नाथत्वं च हितकरणात् स्यादित्याह—'लोगहियाणं' लोकाय—सकलेन्द्रियादिप्राणिवर्गाय पंचास्तिकायात्मकाय वा सम्यग् लक्षणप्ररूपणादिना(रक्षादिना)वा लोकहितास्तेभ्यः, हितत्वं च यथावस्थितवस्तुप्रकाशनादेवेत्याह—'लोगपईवाणं' लोकस्य—विशिष्टसंज्ञितिर्यग्नरामररूपस्य सद्देशनां मिर्मिथ्यात्वादितमोऽपनयनेन यथावस्थितपदार्थसार्थप्रकाशनेन च प्रदीपा इव लोकप्रदीपास्तेभ्यः, इदं च विशेषणं द्रष्टृलोकमाश्रित्योक्तं, अथ दृश्यलोकमाश्रित्याह—'लोगपज्जोअगराणं' लोकस्य—लोक्यत इति व्युत्पत्त्या लोकालोकस्वरूपस्य केवलालोकपूर्वकप्रवचनप्रभापटलेन सूर्यवत् प्रद्योतकराः तेभ्यः ५, अत्र संप्रदायः—

बारस वासे छम्मास अद्धमासं च तवमणुचरित्ता। निज्जिअउवसग्गपरीसहस्स सिरिवद्धमाणस्स ॥ १ ॥ जंभियवहि उज्जुवालियतीरि वियावत्तसामसालअहे। छट्ठेणुक्कडुयस्स उ उप्पन्नं केवलं नाणं ॥ २ ॥ चउविहसुरेहिं रइए ओसरणे तत्थ कप्पमिइ

काउं । सायं पहू अभावियपरिसाइवि कुणइ धम्मकहं ॥३॥ जओ–सव्वं च देसविरइं संमं घित्थइ व होइ कहणाओ । इहरा अमूढलक्खो न कहेइ भविस्सइ न तं च ॥४॥ चउविहसुरपरियरिओ रयणीए बारजोयणेहिं तओ । पत्तो मज्झिमपावा बहि महसेणयवणुज्जाणे ॥ ५ ॥ तहिं भुवणवईवंतरजोइसवेमाणिआवि ओसरणे । सविड्ढीइ सपरिसा कासी नाणुप्पयामहिमं ॥ ६ ॥ तत्थ किर सोमिलज्ञोत्ति माहणो तस्स दिक्ख लंमि ! पउरा जणजाणवया समागया जन्नवाडंमि ॥७॥ तह इंदभूतिऽगणिभूइवाउभूइवियत्तय सुहम्मा । मंडियमोरियपुत्ता अकंपिओ अयलभाया य ॥८॥ मेयज्जपहासा इय इगार वेयाइविउ महुज्झाया । उन्नयविसालवंसा समागया जन्नवाडं तं ॥९॥ तं दिव्वदेवघोसं सोऊणं माणवा तहिं तुट्ठा । अहो जन्निएहिं जुट्ठं देवा किर आगया इहयं ॥१०॥ सोऊण कीरभाणिं महिमं देवेहिं जिणवरिंदस्स । अह एइ अहंमाणी अमरिसिओ इंदभूइत्ति ॥११॥ मोत्तूण ममं लोगो किं धावइ एस तस्स पामूलं । अन्नोऽवि जाणइ मए ठिअंमि? कत्तोचयं एयं ? ॥१२॥ वञ्चिज व मुक्खजणो देवा कहऽणेण विम्हयं नीया ? । वंदंति संथुणंति य जेणं सव्वन्नुबुद्धीए ॥१३॥ अहवा जारिसउच्चिस सो णी तारिसा सुरा तेऽवि। अणुसरिसो संजोगो ग नडाणं व मुक्खाणं ॥१४॥ उं हयप्पयावं पुरओ देवाण दाणवाणं च । नासेहं नीसेसं खणेण सव्वन्नुवायं से ॥१४॥ इय वुत्तूणं पत्तो दट्ठुं तेलोक्कपरिवुडं वीरं । चउतीसाइसयनिहिं स संकिओ चिट्ठिओ पुरओ ॥१५॥ भणियं च–"साक्षाद्दृष्ट्वेन्द्रभूतिः समवसृतिभुवो भूपणस्यांतिकस्थानायातानंगनाभिः सह विबुधवरान् पंचवर्णैर्विमानैः। रूपं चाश्चर्यरूपं जगति दश दिशो भासयन् रकां ।, तस्थौ क्षोभात् सशंको मुनिपतिपुरतो हा किमेतत् किमेतत् ? ॥१७॥ हे इंदभूइ गोयम सागय त्ते जिणेण चिंतेइ । नामंपि मे विआणइ अहवा को मं न याणेइ? ॥१८॥ जइ वा हियगयं मे संसयमुन्निज अहव छिंदिज्जा। तो हुज्ज विम्हओ मे इय चिंततो पुणो

भणिओ ॥१९॥ किं मन्नि अत्थि जीवो उआहु नत्थित्ति संसओ तुज्झ। वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥२०॥ हे इंद्रभूते किं मन्यसे—अस्ति जीवः, स वै आत्मा ज्ञानमय इत्याद्युक्तत्वात्, उताहो किं वा नास्ति, यतो विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति, न प्रेत्य संज्ञाऽस्तीत्युक्तं, विज्ञानं—चैतन्यं तदेव घनो नीलादिरूपत्वात् समुत्थाय—उत्पद्य पुनस्तान्येवानुसृत्य विनश्यति—तत्रैवाव्यक्ततया संलीयते, न प्रेत्यसंज्ञा—मृत्वा पुनर्जन्म, भूतानां परलोके गमनाभावात्, इत्युभयास्तित्वे किं प्रमाणमितिसंशयः, अर्थं पूर्वापरवाक्याविरोधलक्षणं चशब्दाद्युक्ति हृदयं च, अयं अंतःस्फुरत्तयाऽध्यक्षः विज्ञानं ज्ञानदर्शनोपयोगरूपं ततोऽनन्यत्वादात्मा विज्ञानघनः, एवावधारणे, समुत्थाय कथंचिदुत्पद्य, यथा घटादिविज्ञानपरिणतो ह्यात्मा घटादिर्भवति तद्विज्ञानक्षयोपशमस्य तत्सापेक्षत्वाद् अन्यथा निरालंबनतया तस्य मिथ्यात्वप्रसक्तेः, तान्येवानु विनश्यति तेषु विवक्षितेषु भूतेषु व्यवहितेषु अपगतेषु वा आत्मापि तद्विज्ञानघनात्मना उपरमते, अन्यविज्ञानात्मना उत्पद्यते, यदिवा सामान्यचैतन्यरूपतयाऽवतिष्ठते इति न प्रेत्यसंज्ञाऽस्ति—प्राक्तनी घटादिविज्ञानसंज्ञाऽवतिष्ठते, सांप्रतीनविज्ञानोपयोगविघ्नितत्वात्, छिन्नंमि संसयंमी जिणेण जरमरणविप्पमुक्केणं। सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ २१ ॥ तं पव्वइयं सोउं सुह(वुत्तं)अग्गिभूइणा अमरिसेणं। वच्चामि णमाणेमी पराजिणित्ताण तं समणं ॥२२॥ छलिओ छलाइणा सो मन्ने माइंदजालिओ वावि। को व मुणइ कह वत्तं इत्ताहे वट्टमाणिं से ॥२३॥ सो पक्खंतरमेगंपि जाइ जइ मे तओ मि तस्सेव। सीसत्तं हुज्ज गओ वुत्तुं पत्तो जिणसगासं ॥२४॥ हे अग्गिभूइ गोअम! सागयमिइ नामगोअओ वुत्तो। त्रिम्हइओ पुरिमिल्लो व चिंतिरो पुण जिणेणुत्तो ॥२५॥ किं मन्ने अत्थि कम्मं उआहु नत्थित्ति संसओ तुज्झ। वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥२६॥ हे अग्निभूते! किं मन्यसे

कर्म्मास्ति, यथा पुण्यः पुण्येन पापः पापेन कर्मणेत्यादि, उत नास्ति यतः कर्मप्रकृतीश्वरादिसर्वव्युदासेनोक्तं 'पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं उतामृतस्येशानो यदन्नेनातिरोहति यदेजति यन्नैजति यद् दूरे यद् अंतिके यदंतरस्य सर्वस्यास्य बाह्यत' इत्यादि, इदं प्रत्यक्षं वर्तमानं ग्निं वाक्यालंकारे सर्वं चेतनादि उतोऽप्यर्थे अमृतत्वस्य-मोक्षस्येशानः-प्रभुः अन्नेन-आहारेण तिरोहति-अतिशयेन वृद्धिं याति एजते अश्वादि नैजते पर्वतादि आर्यत्वादिरूपं दूरे मेर्वादि अंतिके-समीपे यदन्तः-मध्ये अस्य चेतनाचेतनस्य सर्वस्यास्य बाह्यतः सर्वपुरुष एवेति कर्म्मसत्ता न श्रद्धेयेति ते संशयः, अयं विषयविभागात्मकं. यथा त्रिधा वेदपदानि 'अग्निहोत्रं जुहुया'दित्यादीनि विधिवादपराणि, स्तुत्यर्थनिन्दार्थवादार्थान् त्रिधा, तत्र स्तुत्यर्थवादप्रधानानि यथा 'स सर्वविद्यस्यैष महिमा सुविदितत्येव ब्रह्मपुरे ह्येष व्योम्नि आत्मा सुप्रतिष्ठितस्तमक्षरं वेदयते यस्तु स सर्वज्ञः सर्ववित् सर्वमेवाविश'इत्यादि, निन्दार्थवादप्रधानानि यथा-एष वः प्रथमो यज्ञो योऽग्निष्टोमः, योऽनेनानिष्ट्वा अन्येन यजते स गर्तमभ्यपतदि'त्यादि. अत्र पशुमेधादीनां करणं निषेधते इत्ययं निन्दार्थवादः, द्वादश मासाः संवत्सरः अग्निरुष्णो अग्निर्हिमस्य भेषजमित्यादीनि स्वर्गादप्रधानानि, लोके प्रसिद्धस्यैवार्थस्यैतैरनुवादः, ततश्च पुरुष एवेत्यादीनां अप्यनयैव यदेतानि पुरुषस्तुतिपराणि. तदिवा नान्यादिमद्त्यागायैतद्भावनाप्रतिपादकानि न कर्म्मसत्तानिषेधकानि, इत्थं चैतदंगीकर्त्तव्यं. न खल्वकर्म्मण आत्मनः कर्तृत्वोपपत्तिः एकांततशुद्धतया प्रवृत्तिनिबंधनाभावात् गणधरवत्. छिंदंति संसयं जे जिणाण जम्मणमरणनिप्पमुक्काणं। सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥२७॥ ते पव्वइए सोउं अयरोमा नाग्गि बिंति निंति। वच्चामो वंदामो णं पुणुणि पज्जुवासामो ॥२८॥ सीसत्तणोवगया संपइ इंदग्गिभूइणो जस्स। तिहुयणकयप्पणामो स महाभागोऽभिगमणिज्जो ॥२९॥ तम्मि गए इन्द्रभूतिवाक्याग्निभूत्योर्दीक्षायां वायुभूतिः

मो। वुच्छिन्नसंसया वा वुत्तुं पत्ता जिणसगासं ॥३०॥ आभट्ठा य जिणेणं नामगोएहिं सागयंति इमे। विम्हइया पुण वुत्ता चिरसंसय-पयत्थकहणेण ॥३१॥ जीवे१कम्मे२तज्जीव३भूय४ तारिसय५बंधमुक्खो य६। देवा७नेरइयाविय८ पुण्णे९ परलोय१०नि० णे११ ॥३२॥ तत्रैवं तृतीय उक्तः-हे वाउभूइ गोयम! मन्नसि तज्जीवतच्छरीरंति। संसइओ वेयत्थं न याणसी तं इमं ज ॥३३॥ स एव जीवस्तदेव शरीरं इति माननात् 'विज्ञानघन एवैतेभ्य' इत्यादि प्राग्वदर्थः, नवरं न प्रेत्यसंज्ञाऽ -न देहातिरिक्त आत्मसंज्ञाऽस्ति अभेदाद्गौरतादिवद् भूतसमुदायमात्रधर्मत्वाच्चैतन्यस्येति वेदार्थक्लृप्तेः, संशयश्च 'सत्येन लभ्य पसा ह्येष ब्रह्मचर्येण नित्यं ज्योतिर्मयो हि शुद्धो यं पश्यन्ति धीरा यतयः संयतात्मान'इत्यादिसूत्रात् देहातिरिक्तात्मप्रतिपादनपरात् तथारूपोपचाराच्च, तत्र देहे आत्मोपचारो यथा किंचित् पिपीलिकादि सत्त्वं प्रतीत्य यथा ब्रवीति लोको यथैतं जीवं मा मारयेति शरीरव्यतिरिक्ते च यथा कंचिन् मृतं दृष्ट्वा लोको ब्रवीति-गतः संज्ञी यस्येदं शरीरमिति, तथा वासांसि जीर्णानि यथा विहाय, नवानि गृह्णाति नरोऽपराणि। तथा शरीराण्यपरापराणि, जहाति गृह्णाति च पार्थ! जीवः ॥१॥ इत्यादेश्च, अस्त्येतत् सौम्य!, भगवन्नस्त्येतत्, वेदपदानामयं परमार्थः-विज्ञानघन एवात्मा प्रतिप्रदेशमनंतज्ञानदर्शनपर्यायात्मकत्वात्, भूतेभ्यः क्षित्युदकादिभ्यः कथंचिद्भूत्वा घटाद्यर्थाश्रयेण विशेषतो नीलादिविज्ञानोत्पत्तेः अनु विनश्यति, घटादिनाशे तदाश्रितोद्भूतनीलादिविज्ञानोपरमात्, शेषं प्राग्वत् इति, देहेन्द्रियव्यतिरिक्तश्चात्मा तद्विगमेऽपि तदुपलब्धार्थानुस्मरणात्, मया दृष्टं श्रुतं स्पृष्टं, घ्रातं आस्वादितं स्मृतम्। इत्येककर्तृका भावा, भूतचिद्वादिनः कथं?॥१॥ निर्बाधोऽस्ति ततो जीवः, स्थित्युत्पत्तिव्ययात्मकः। ज्ञाता द्रष्टा गुणी भोक्ता, कर्ता कायप्रमाणकः॥२॥ चतुर्थस्त्वेवं-भारद्दायवियत्ता! मन्नसि पण भूय अत्थि नत्थित्ति। संसइयो न वियाणसि वेयत्थं तं इमं सुणसु ॥३४॥ 'स्वप्नोपमं वै सकलमित्येष ब्रह्मविधिरंजसा विज्ञेय'

इत्यादि तथा 'द्यावापृथिवी' इत्यादि 'पृथिवी देवता आपो देवते'त्यादि भूतासत्तासत्तापराणि वेदवाक्यादीनि ते संशयहेतुः, ब्रह्मविधिः—परमार्थप्रकारः अंजसा—प्रगुणन्यायेन विज्ञेयो—भाव्यः, तत्रायं भावार्थः—स्वप्नोपमं इत्यादि अध्यात्मचिंतायां मणिकनकांगनादिसंयोगस्यानियतत्वादस्थिरत्वादसारत्वाद् विपाककटुकत्वादास्थानिवृत्तिपरं, नतु तदत्यंताभावप्रतिपादकं, स्वप्नबुद्धेरप्यनेकनिबंधनत्वात्, अणुभूय दिट्ठचिंतिय सयपयइवियार देवयाऽनूवा। सुविणस्स निमित्ताइं अणुत्तरो चेव नाभावो ॥३५॥ पंचमश्चैवम्—सुहमा अगणिविसायण! मन्नसि जो जारिसो इह भवेऽवि। सो तारिसो परभवे वेयपयत्थेसु संसइओ ॥३६॥ यथा 'पुरुषो वै पुरुषत्वमश्नुते पशवः प त्व'मित्यादि, युक्तं चैतत्, कारणानुरूपकार्यत्वात्, कथं त्वेतत्, तथा 'शृगालो वै एष जायते' इत्यादि, तथा 'ब्रह्मादिषु तृणांतेषु, भूतेषु परिवर्तते। जले भुवि तथाऽऽकाशे, जायमानः पुनः पुनः ॥१॥ इत्यतः संशयस्ते, तत्र नायं नियमः, कारणाननुरूपकार्यस्यापि दर्शनात्, यथा शृंगाच्छरो जायते, तस्मादेव सर्षपानुलिप्तात् तृणानि गोलोमअविलोमभ्यो दूर्वा गोमयाच्छालूरः, इयं तु वस्तुस्थितिः—आयुष्कर्म्मापेक्षया जीवानां गतिः, तस्य नरकायुष्कत्वादिचित्रत्वात् कार्यवैचित्र्यं, यथा—मिच्छादिट्ठी महारंभपरिग्गहो तिव्वकोहनिस्सीलो। नरयाउयं निबंधइ पावमई रुद्दपरिणामो ॥३७॥ उम्मग्गदेसओ मग्गनासओ गूढहिययमाइल्लो। सढसीलो अससल्लो तिरिआउं बंधए जीवो ॥३८॥ पयईइ तणुकसाओ दाणरओ अज्जवाइगुणजुत्तो। तह सच्चयाइनिरओ मणुआउं बंधई जीवो ॥३९॥ अणुव्वयमहव्वएहिं बालतवोऽकामनिज्जराए उ। देवाउअं निबंधइ सम्मद्दिट्ठी य जो जीवो ॥४०॥ तथा—रज्जुग्गहणे विसभक्खणे अ जलणे अ जलप्पवेसे य। तण्हाछुहाकिलंता मरिऊण हवंति वितरिया ॥४१॥ तथा-जया मोहोदओ तिव्वो अन्नाणं खु महब्भयं। असारं वेयणिज्जं तु, तया एगिंदियत्तणं ॥४२॥ अविय—भूदगवणसुरनिरया दोगइया चउगई तिरिपणिंदि। संखवासाउ मणुआ

पणगइआ सेस इगगइआ ॥४३॥ एवं दानदयादि सर्वमेव वैयर्थ्यमिति संबंधः॥ चासिट्ठ मंडियसुआ किं मन्नसि बंधमुक्ख अत्थि नवा? ।
संसइओ वेयत्थे परमत्थं तत्थिमं सुणसु ॥४४॥'स एष विगुणो विभुर्न बध्यते संसरति वा न मुच्यते मोचयति वा', न वा एष बाह्यम-
भ्यंतरं वा वेद'इत्यादि, विगतसत्त्वादिगुणो विभुः सर्वगो न बध्यते पुण्यपापाभ्यां, न मुच्यते–कर्म्मणा न वियुज्यते बंधाभावात्, न
मोचयत्यन्यमकर्तृत्वात्, बाह्यमात्मभिन्नमहंकारादि अभ्यंतरं–स्वरूपं वेद–विजानाति प्रकृतिधर्म्मत्वात् ज्ञानस्य, प्रकृतेश्चाचेतनत्वाद्बं-
धमोक्षाभाव इति ते मतिः सशरीरस्य संसारिणः अत्र यतः, तन्न, मुक्तिजीवापेक्षमिदं, तत्र भावार्थः–स एष मुक्तात्मा विगतच्छा-
द्मस्थिकज्ञानादिगुणो विभुः—ज्ञानात्मना सर्वगो न बध्यते मिथ्यात्वादिबंधकारणाभावात्, ततो न संसरति भवे कर्म्मबीजा-
भावात्, 'दग्धे बीजे यथे'ति श्लोकः, न मुच्यते मुक्तत्वात्, न मोचयति तदा खलूपदेशादानात्, सांसारिकसुखनिवृत्त्यर्थमाह–
न वा एष मुक्तात्मा बाह्यं स्रक्चंदनादिसुखं अभ्यंतरं मानसादि न वेद–नानुभवात्मना जानाति, संसारिणः बंधमोक्षौ स्तः, आह
च–"न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसंतं प्रियाप्रिये न स्पृशत'इत्यादि, तत्र सशरीरस्य–संसारिणः,
अशरीरं–मुक्तं वसंतं–मुक्तं प्रियाप्रिये–पुण्यपापे न स्पृशतः, कारणाभावादित्यर्थः, तथा जीवकर्मणोरप्यनादिमानेव संयोगो, धर्मा-
स्तिकायाकाशसंयोगवत्, वियोगस्तु यथा कांचनोपलयोः क्षारमृत्पुटपाकादिना तथा जीवकर्म्मणोरपि ज्ञानतपःसंयमादिना, मूर्ता-
मूर्त्तसंयोगघटना तु घटाकाशसंयोगवत्, कषायादिपरिणामाभावाच्च मुक्तानां पुनः कर्मबंधाभावः, उच्यते–जोगा पयडिपएसं ठिइ
अणुभागं कसायओ कुणइ ।" न चेत्थं भव्योच्छेदः, अनागतकालवत् तेषामानंत्यात्, परिमितक्षेत्रे चैषामवस्थितिरमूर्त्तत्वात्
प्रतिद्रव्यमनंतकेवलज्ञानादिसंतानवत्, नर्त्तकीनयने विज्ञानवद्वा, उच्यते च–"आसंसारं सरियासहस्सलक्खेहिं वुज्झमाणाणि ।

पुहवी न निद्धियच्चिय उदहीवि थली न संजाओ ॥४५॥ यथाऽतीतकालो वर्त नत्वमनुभूय जातः अनादिः एवं वार्तमानिकः,मिथ्या- त्वादिसव्यपेक्षात्मोपात्तं कर्म्म कृत्यमनादि वोच्यते, इति षष्ठः संबंधः ॥ मंडियपुत्ता ! सव मन्नसि देवा किमत्थि वा नत्थि ?। वेयत्थे संसइओ दुहाविऽणुवलंभसब्भावा ॥४६॥ 'स एष यज्ञायुधी यजमानोऽंजसा स्वर्गलोकं गच्छती'त्यादि 'अपाम सोमं अमृ अभूम अगमाम जोतिरविदाम देवान् किं नूनमस्मान् तृणवदरातिः किमधूर्त्तिरमृतमर्त्यस्ये'त्यादि,सोमं सोमलतारसं ज्योतिः स्वर्गा अविदाम देवान् देवत्वं प्रा : सः अस्मान् तृणवत् किं करिष्यतीति गम्यं,अरातिः–व्याधिः धुर्त्तिः–जरा अमृतमर्त्यस्य–अमृतत्वं प्राप्तस्य पुरुषस्य, अमृतधर्म्मणो मनुष्यस्य किं करिष्यतीत्यर्थः यदीदं सत्यं तदेतत् कथं ?'को ज ।ति मायोपमान् गीर्वाणान् इद्र- यमवरुणकुबेरादी'नित्यादि द्विधाऽप्यनुपलब्धिः सतां परमाणुमूलोदकपिशाचादीनां असतां शशविषाणादीनामिति ते मतिः, नैनान् अमंस्थाः, शृणु देवस्वरूपानागमागमहेतून्–अणिमिसनयणा मण साहणा पुप्फदामअमिलाणा। चउरंगुलेण भूमिं न छिविंति सुरा जिणा विंति ॥४७॥ संकंतदिव्वपेमा विसयपसत्ता समत्तकत्तव्वा । अणहीणमणुअकज्जा नरभवमसुहं न इंति सुरा ॥४७॥ पंचसु जिण- कल्लाणे चेव महरि तवाणुभावाओ । जंमंतरनेहेण य आगच्छंती सुरा इहयं ॥४८॥ यथा चेदानीं इमे तवापि प्रत्यक्षाः, तथा शेषकालमपि चंद्रादिविमानालयदर्शनात् तथा सिद्धिः, यच्च 'को ज ति मायोपमा'नित्यादि तत् परमार्थचिन्तायां सर्वथा सर्वमनित्यं मायोपमं इति बोधकं, नतु देवनास्तित्वस्यैवेति संबुद्धः सप्तमः ७ ॥ हे गोयमा अकंपिय ! मन्नसि निरया किमत्थि नत्थी । वेयत्थो संदिद्धो दुहाविऽणुवलंभसब वा ॥४९॥ 'नारको वै एष जायते यः शूद्रान्नमश्नाति' इत्यादि 'एष णो नारको भवति यः शूद्रान्नमत्ति 'नह वै प्रेत्य नरके नारकाः संती'त्यादि गतार्थः,केवलं त्वन्मतिः–देवा हि चन्द्रादय इव भवंतु प्रत्यक्षाः अन्ये-

ऽप्युपयाचितादिफलदर्शनानुमानतो अवगम्यंते,नारकास्त्वभिधानव्यतिरिक्तार्थशून्याः कथं गम्यंत इति ?, तत् प्रकृष्टपुण्यफलभाजि-
सिद्धिवदुत्कृष्टपापभाजिनस्ते मंतव्या इत्यष्टमः संबुद्धः८॥ हे अयलभाय हारिय ! किं मन्नसि पुन्नपाव अत्थि न वा । वेयत्थे संस-
इओ विपडिवत्तीहि य बहूहिं ॥५०॥'पुरुष एवेदंग्निं'इत्यादि विधिवादस्तुत्यर्थवादानुवादादिपरतयाऽनेकधा वेदवाक्येष्विदं जात्या-
दिमदत्यागायाद्वैतभावनार्थं पुरुषस्तुतिपरं, परमेकान्तशुद्धतयाऽऽकाशवत् प्रवृत्त्याद्यभावात् कर्मसचिवस्यैवैजनादिकर्तृत्वं नात्मनो
जाघटीतीत्यस्तु कर्म्म, केवलमेतत् कथं 'पुण्यः पुण्येन पापः पापेने'त्यादि यदेवं विप्रतिपत्तयः—आचार्यमतानि तत्राहुः केचित्—
पुण्यमेवैकं चयापचयक्षयैः सुखासुखापवर्गदं आरोग्यानारोग्यमृतिप्रदपथ्याहारवत्, अन्ये त्वाहुः पापमेवैकमपथ्यवत् वैपरीत्यदं,
अन्ये उभयमपि संमिश्रफलं संसारिणामेकान्ततः सुखाद्यभावात्, नारकाणामपि पंचेंद्रियादिपुण्यप्रकृत्यनुभावात्, अपरे तु स्वतंत्र-
मुभयं विविक्तसुखासुखहेतुः क्षयाच्च मुक्तिरिति किमत्र तत्त्वमिति तेऽभिप्रायः, सौम्य ! स्वल्पमपि पुण्यं न दुःखाय, पापं च न
सुखाय, स्वभावानतिवृत्तेः, उभयमिश्रं तु सर्वथाप्यसंभवि, अत्यंतपुण्यापुण्यातिशये युगपत्स्वर्गनरकादिसुखदुःखानुभवभावात्।
विविक्तपुण्यापुण्ये तु संगते एव स्वस्योदयोपशमनतो जंतूनां सुखदुःखयोर्वैचित्र्यसिद्धेरिति नवमः संबुद्धः९॥ मेयज्जा कोडिन्ना !
किं मन्नसि अत्थि नत्थि परलोओ । वेयपयाण य अत्थं विसयं च न याणसी सुणसु ॥ ५१ ॥ 'स वै अयं आत्मा ज्ञानमय'
इत्यादि प्रेत्य—मृत्वा न पुनर्जन्म—परलोकसंज्ञाऽस्ति विज्ञानघनात्मनो भूतान्यनु विनाशादित्यभिप्रायस्ते, तन्न, क्वचिद् देहोपलब्धा-
वपि चैतन्यसंशयादिति, प्रेत्य—परत्र स्वान्येहाश्रिता संज्ञा नास्तीति, देहादन्यच्चैतन्यं चलनादिचेष्टानिमित्तत्वात् मारुतः पादपादि-
नेति, चैतन्यमात्मधर्मस्तस्य चानादिमत्कर्म्मसंतत्यालिंगितत्वेन कर्मपरिणामापेक्षमनुष्यादिपर्यायांतरावाप्तिः अविरुद्धा, आरण्य-

केऽपि ।दिषु तृणांतेषु श्लोकः, तथा वासांसि जीर्णानि यथा विहाय, नवानि गृह्णाति नरोऽपराणि । तथा शरीराण्यपरापराणि, जहाति गृह्णाति च पार्थ ! जीवः॥१॥ इति दशमः१०॥ हे कोडिन्न पभासा ! मन्नसि निवाणमत्थि किं वा नो । अमुणंतो वेयत्थे विसयविभागं तयं सुणसु ॥५२॥ 'जरामर्यं वा एतत्सर्वं यदग्निहोत्र'मिति, अत्राभ्युदयफलमग्निहोत्रमिति, सदाकरणोक्तेः शिवाव ेः क्रियारंभकालाभावात् मोक्षाभावः, उक्तश्चासौ–'द्वे ब्रह्मणी वेदितव्ये परमपरं च, तत्र परं सत्यं, अपरं च ज्ञानमनंतं ब्रह्मे'ति ते मतिः, तन्न, यतो 'जरामर्यं वा' वाऽप्यर्थो यावज्जीवमपि, नतु नियोगत इति,शिवावाप्तिहेतुज्ञानादिक्रियाकालास्तिता दुर्वारेत्यस्ति मोक्षः, उच्यते च–'नाणं पयासगं सोहओ तवो संजमो अ गुत्तिकरो । तिण्हंपि समायोगे मुक्खो जिणसासणे भणिओ ॥ १ ॥ (आ० नि०) तिर्यगादिभवस्य चात्मपर्यायत्वेन भवनिवृत्तौ न सर्वथा निवृत्तिः, कुंडलनिवृत्तौ हेम्न इव इति भवनिवृत्तावप्यनिवृत्तेर्भवादन्यो मुक्तात्माधारो वस्तुरूपो मोक्षोऽस्ति, शुद्धपदवाच्यत्वात्, जीवादिपदार्थवत्, व्यतिरेके खरविषाणादीत्येकादशोऽपि संबुद्धः ११ ॥ इय छिन्नसंसया ते जिणेण पव्वाविया पुणो पुव्वं । चउरो सह पंचसएहिं धुट्ठेहि य तिहिं सएहिं कमा ॥५३॥ तिवई पुच्छा पुव्वकयबारसंगा असंगिणा पहुणा । भुवणब्भहिए गणहरपयंमि संठाविआ सव्वे ॥ ५४ ॥ इय गणहरलोयस्स व सुहुमपयत्थप्पयासणेण जिणा । लोगप्पज्जोयगरा जे हुंति रविव्व तेसिं नमो ॥ ५५ ॥ एवंविधा मिहिरादयोऽपि तत्तीर्थिकमतेन स्युरिति तद्विशेषाय उपयोगसंपद एव हेतुसंपदमाह—'अभयदयाण'मित्यादि, अभयं–इहलोकपरलोकादानाकस्माज्जीवितमरणाश्लोकलक्षणसप्तभयाभावं दयंत इत्यभयदास्तेभ्यः ३ 'सरणदयाणं' रागादिभयभीतसत्त्वानां शरणं–त्राणं दयंत इति शरणदयास्तेभ्यः ४ 'बोहिदयाणं' बोधिं–भवांतरे शुद्धधर्मसंप्राप्तिं दयंत इति बोधिदयास्तेभ्यः ५, एतानि च यथोत्तरं पूर्वपूर्व-

फलभूतानि, तथाहि—अभयफलं चक्षुः चक्षुःफलं मार्ग इत्यादि संपत्, अथाद्याया एव विशेषोपयोगसंपदमाह—'धम्मदयाण'-
मित्यादि, धर्म्मे—देशसर्वचारित्रलक्षणक्रियापरिणामगर्भे यथार्हं दयंत इति धर्मदयास्तेभ्यः ३ अत्र हेत्वंतराणां सद्भावेऽपि भग-
वन्त एव धर्म्मप्रदाने प्रधानहेतव इति, धर्मदयत्वं च धर्मदेशनयैव स्यादित्याह—'धम्मदेसयाणं' धर्मं प्रस्तुतं यथायोग्यमवन्ध्य-
तया देशयन्तीति धर्मदेशकास्तेभ्यः, 'धम्मनायगाणं' धर्मस्य वशीकरणात् फलभोगात् प्रवर्धनात् व्याघातरक्षणाच्च नायका-
स्तेभ्यः 'धम्मसारहीणं' प्रस्तुतधर्मस्य भव्यापेक्षया सम्यग्दर्शनप्रवर्तनपालनयोगात् सारथयो धर्म्मसारथयस्तेभ्यः, जह सारही
सुकुसलो रहं तुरंगे तहा पयट्टेइ । जह नवि होइ अवाओ तुरंगमाणं रहस्सावि ॥ ५६ ॥ एवं जिणुत्तमेहिवि उस्सग्गववायपमुहजु-
त्तीहिं । एगंतहिओ धम्मो उवइट्ठो धम्मधम्मीणं ॥५७॥ इह धम्मो होइ रहो तुरंगमा तस्स धारगा पुरिसा। उभयहियमुवइसंता
जिणनाहा धम्मसारहिणो ॥५८॥ ( ३३७-३३८-३३९ ) 'धम्मवरचाउरंतचक्कवट्टीणं' धर्म्म एव वरं—प्रधानं चतसृणां
गतीनामंतकरणाच्चक्रमिव चक्रं मिथ्यात्वादिभावशत्रुलवनाद्धर्मचक्रं तेन वर्त्तंत इत्येवंशीला धर्म्मवरचातुरंतचक्रवर्तिनस्तेभ्यः ४,
'अतः समृद्ध्यादावा'इति (हैम० ८-१पा०) —कृतसूत्रवशादात्त्वं, यथा—उत्तरओ हिमवंतो पुव्वावरदाहिणा तओ अंता । लवणसमुद्दं
पत्ता तो भरहं चाउरंतमिणं ॥ ५९ ॥(३४१)एयस्स सामिणो जह भरहाई चक्कवट्टिणो हुंति। धम्मवरचाउरंतस्स तह जि चक्क-
वट्टिसमा ॥६०॥(३४२)अहवा चउदिसि धारं चउरंतं चक्कमुचइ तहेव । दाणतवसीलभावणचउधारं धम्मचक्कमिणं ॥६१॥ (३४३)
संपत्६। अथाऽऽद्ययोरेव सकारणस्वरूपसंपदमाह—'अप्पडिहये'त्यादि, अप्रतिहते—सर्वत्राप्रति लिते वरे—क्षायिकत्वात् प्रधाने
ज्ञानदर्शने—विशेषसाम न्यावबोधरूपे धारयंतीत्यप्रतिहतवरज्ञानदर्शनधराः तेभ्यः, 'वियट्टछउमाणं' छादयतीति छद्म—ज्ञानावर-

णीयदर्शनावरणीयमोहनीयांतरायेतिघातिकर्म्मचतुष्टयं तद्व्यावृत्तं–अ तं येभ्यः ते व्यावृत्तच्छद्मानः तेभ्यः२, नणु अट्ठवि कम्माइं जिणाण नट्ठाइं किं चउक्केण ? । सच्चं ओसरणत्थे पडुच्च छउमक्खओ भणिओ ॥६२॥ संपत् ७। अथ स्वतुल्यपरफलकर्तृत्वमाह– 'जिणाण'मित्यादि, जिनेभ्यः–स्वयं च रागादिजेतृभ्यः, जापकेभ्यः अन्येपामप्युपदेशादिना रागादिजयकारयितृभ्यः, तीर्णेभ्यः स्वयं भवार्णवपारगतेभ्यः परेपामपि ततस्तारयितृभ्यः बुद्धेभ्यः स्वयंज्ञाततत्त्वेभ्यः बोधकेभ्यः अपरेषामपि तत्त्वज्ञापकेभ्यः मुक्तेभ्यः स्वयं भवहेतुकर्मपाशनिर्गतेभ्यः मोचकेभ्य इतरेपामपि ततः प्रमोचयितृभ्यः ४, संपत् ८, एतावता केवल्यवस्थाभावनो , सांप्रतं सिद्धावस्थामाश्रित्य नवमीं संपदमाह–' वन्नूण'मित्यादि, सर्वं वस्तु सामान्यविशेषात्मकमपि प्रथमसमये विशेषात्मकतया जानंतीति सर्वज्ञास्तेभ्यः, ततो द्वितीयसमये सर्वं वस्तु सामान्यात्मकतया पश्यंतीत्येवंशीलाः सर्वदर्शिनस्तेभ्यः, आह—इत्थमेपां दर्शनसमये ज्ञानस्यासत्त्वादसर्वज्ञताप्रसंगः, नैवं, सर्वस्य केवलिनः सदैव ज्ञानदर्शनलब्धिसद्भावेऽपि तत्स्वाभाव्यान्न युगपदेकस्मि न् समये उपयोगद्वयसंभवः, क्षायोपशमिकसंवेदनेऽपि तथा दर्शनात्, न च चतुर्ज्ञानिनोऽप्येकस्मिन् ज्ञानोपयोगे सति शेषज्ञानाभावः स्यात्, अत्र बहु वक्तव्यं, तत्तु नोच्यते (तच्च बृहत्कल्पतो ज्ञेयं) ग्रंथगौरवभयात्, तथा अप्रतिहतवरेत्याद्युक्त्वा पुनरिह विशेषणद्वयोपादानं मुक्तावस्थापेक्षं 'सिवमलयं चे'त्यादि,शिवं सर्वोपद्रवाभवात् अचलं स्वाभाविकप्रायोगिकचलनक्रियाविरहात् अरुजं रोगवर्जितत्वात्, अनंतं अनंतसिद्धमानात् (अनंतज्ञानात्मत्वाद्वा), अक्षयं विनाशहेत्वभावात् अव्याबाधं देहमनोव्याबाधारहितं अमूर्त्तत्वात् न पुनर्भवे आवृत्तिः–आगमनं यस्मात् तदपुनर त्ति भवभ्रमणहेतुकर्म्माभावात्, उक्तं च–दड्ढंमि जहा बीए न होइ पुण अंकुरस्स उप्पत्ती । तह कम्मवीयविरहे भवंकुरस्सावि नो भावो॥६३॥(२८६)त्ति, सर्वत्र सिद्धिगतजीवानामिति गम्यं, आधेयवशा-

दाधारस्यापि तद्व्यपदेशो न दुष्ट आधाराधेययोरभेदोपचारात् मंचाः क्रोशंतीत्यादिव्यपदेशवत् शिवगतिनामधेयं लोकाग्रं स्थानं-निवासं सम्यक् सर्वकर्म्मोन्मूलनेन, नतु एकेंद्रियादिवत्सकर्मकत्वेऽपि, प्राप्ता-गतास्तेभ्यः 'नमो जिणाणं जियभयाण'मिति तृतीय आलापकः सुगम एव, अत्र च भाष्यं-"सवन्नूयाइ पढमो बीओ सिवमयलमाइ आलावो। तइओ नमो जिणाणं जियभयाणंति निद्दिट्ठो॥१॥त्ति, एवं च त्रयस्त्रिंशदालापकप्रमाणोऽयं जीवाभिगमादिसिद्धांतललितविस्तरावृत्त्याद्यनुसारेण व्याख्यातः, पुनरंते नमस्काराभिधानं मध्यपदेष्वप्यनुवृत्त्यर्थं, अत्र च स्तुतित्वान्न पौनरुक्त्यं, यदागमः-"सज्झायझाणतवओसहेसु उवएसथुइपयाणेसु। संतगुणकित्तणेसु य न हुंति पुणरुत्तदोसा उ ॥ १ ॥ अनेन च जिनजन्मादिषु शक्रो जिनान् स्तौतीत्ययं शक्रस्तवोऽप्युच्यते, अथ चूर्णिः-"एस भावारिहंतसब्भूयगुणकित्तणंति पढमो अहिगारो, इयाणिं कालत्तयवत्तिदव्वारिहंतसंथवणंति बीयोऽहिगारो भन्नइ, यद्भाष्यम्-"विसयवहुत्ते किरिया भावुल्लासाउ बहुफला होइ। पणिवायदंडगोवरि भन्नइ तम्हा इमा गाहा॥१॥(३६२)॥जे य अइयासिद्धा जे य भविस्संतीऽणागए काले। संपइ य वट्टमाणा सव्वे तिविहेण वंदामि ॥१॥ ये च अनंता अपि जिनाः अतीताः सिद्धाः-अनंता अतिक्रांतकाले मुक्ताः, ये च अनंता जिना भविष्यंति सिद्धा इत्यत्रापि योज्यं अनागामिनि काले, संप्रति वर्तमानाः, इदानीमपि येऽनासादितभावार्हत्पदा वर्तंते, छद्मस्था इत्यर्थः, एतेन छद्मस्थभावनमप्युक्तं, तथा च लघुभाष्यम्-जे य अइयगाहाए वीयहिगारेण दव्वअरिहंते। पणमामि भावसारं छउमत्थे तिसुवि कालेसु॥१॥त्ति, तान् सर्वान् त्रिविधेन-त्रिकरणविशुद्धं वंदे नमामि स्तवीमि च, ननु किं द्रव्यार्हतो नरकादिगतिगता अपि भावार्हद्वद्वंदनार्हाः?, कामं, कथमिति चेद् उच्यते-आगमप्रामाण्यात्, तथा चावश्यकचूर्णिष्वपि उक्तं-'उक्कोसपएणं सत्तरं तित्थयरसयं जहण्णयपएणं

पणसय सद्ध दुचच सङ्गेगचच पणतीसा। तीस अडवीस वीसा पनरस बारसयधणुतणुणो ॥ ३४ ॥ निवआऊ चुलसी विसयरि
पुव्वलक्खाण तिएग ससलक्खा। पणनवइ चुलसी सट्ठी तीस दस तिसहस विंति सत्तसया ॥३५॥ अड चक्की पत्त सिवं सुभूम
बंभो य अप्पइट्ठाणे। मघवं सणंकुमारो सणंकुमारंगया कप्पं ॥३६॥ उसभे भरहो अजिए सगरो मघवं सणंकुमारो य। सिरिधम्म-
संतिअंतरि संतिकुंथुअरजिण चक्की ॥३७॥ अरमल्लिमज्झि सुहुमो सुव्वए पउमो नमिम्मि हरिसेणो। नमिनेमिअंतरि सुजओ नेमि-
पासंतरे बंभो ॥ ३८ ॥ नेसप्पे पंडुयए पिंगलए सव्वरयण महपउमे। काल महकाल माणव संखे चक्कीण नवनिहिणो ॥ ३९ ॥
पलिओवमाउ तन्नामसुरगिहा वेरुल्लियमणिकवाडा। कंकेयणमयमञ्जूससंठिया जण्हवीइ मुहे ॥४०॥ घरधन्नभूसणमणीवत्थकालद्ध-
जुद्धनट्टविही। चक्कट्ठिया जोयण अड नववारुच पिहु॰डदिहा ॥ ४१ ॥ सेणावइ गाहावइ पुरोहि वड्ढइ गयत्थिहयचक्कं। दंडासि
छत्तकागिणि चम्माणि पणिंदिगिंदी सग ॥४२॥ असि बत्तीसंगुल दुकर चम्मु वामसम चक्क छगुदंडं। हुंति पुण वारजोयण चम-
छत्ता चक्किणा पुट्ठा ॥४३॥ चउरंगुलप्पमाणो सुवन्नवरकागिणी छलंसो य। चउरंगुलमणि तस्सद्धवित्थडो रयणचउदसगं ॥४४॥
जक्खा सोल सोलसहसदुगुणानि निवि३२यर३२ कन्न३२ वेस३२ देसपुरा। छन्नवइ कोडिसुहडा गगहयरहचक्कचुलसीई ॥४५॥
वत्तीससहस्सा नाडयाण बत्तीसविहिनिबद्धाणं। सूवा तिसयतिसट्ठा अट्ठार सेणी पसेणी य ॥४६॥ कव्वडमडंबचउवीससहस दुत्ति-
गुणिय पट्टणाइपुरा। छप्पन्न अंतरोदग गुणवन्न कुरज्ज तह भरहे ॥ ४७ ॥ छन्नवई गामकोडी दोणमुहा९९ऽऽगरय२० खेड१६
संवाहा १४। नवनवइ वीस सोलस चउदसहसाइ छक्खंडा ॥४८॥ एयाण वियड्ढगवि दसहियसयदेसपुरदुसेढिस्स। सामित्ताइ
करंता चक्कधरा हुंति इय बलिणो ॥ ४९ ॥ बत्तीस निवसहस्सा सव्वबलेणं तु संकलनिबद्धं। अञ्छंति चक्कवट्टिं अगडतडंमी ठियं

संतं ॥५०॥ घित्तूण संकलं सो वामगहत्थेण अंछमाणाणं। भुंजिज्ज विलिम्पिज्ज व ते तंबुठिया न चायंति ॥५१॥ विण्हु तिविट्ठु
दुविट्ठु सयंभु पुरिसुत्तमे पुरिससीहे। तह पुरिसपुंडरीए दत्ते लक्खमण कण्हे य ॥५२॥ विण्हुबलजम्मनयरे पोयणपुरबारवई-
तिगऽस्सपुरं। चक्कपुरं वाणारसी रायगिहं महुरनयरी य ॥५३॥ हरिमायाउ मिगावइ उमा य पुहवी य सीय अम्मयया। लच्छि-
वई सेसवई केगई देवई चेव ॥५४॥ हवइ पयावइ बंभो रुद्दो सोमो सिवो तह सिवो य। अग्गिसिहो य दमरहो वसुदेवो विण्हु-
बलपियरो ॥५५॥ कासवगुत्ता इक्खागवंसजा पउमलक्खणा दोन्नि। हरिवंसकुला गोयमगुत्ता सेसट्ठजुयलाओ ॥ ५६ ॥ चक्कि-
द्धरिद्धिबलिया चक्कधणुगयातिसंखमणिमाला। सग रयणा गरुडझया नीलतणूसी(पी)यवसण हरी ॥ ५७ ॥ विण्हुबलदेहमाणं
असीइ सत्तरी य सट्ठि पन्नासा। पणयाला गुणतीसा वीस सोलस दस धणूणि ॥ ५८ ॥ हरिआउ वरिगलक्खा चुलसी दुग-
सयरि सट्ठि तीस दस। सहस्साइं पंचसट्ठी चउप्पन्ना बारसेगं च ॥ ५९ ॥ पढमो अपइट्ठाणे पंच य छट्ठीइ पंचमी एगो। एगो
य चउत्थीए चरिमहरि वालुयपभाए ॥६०॥ सेयंसंमि तिविट्ठू वसुपुज्जि दुविट्ठु सयंभु विमलंमि। पुरिसुत्तमो अणंते धम्मजिणे
पुरिससीहहरी ॥६१॥ अरमल्लिअंतरे सुभुम मल्लीए पुरिसपुंडरिय दत्ता। मुणिसुव्वयनमि अंतर लक्खमणो कण्ह नेमिंमि ॥६२॥
॥६२॥ चक्किदुगं हरिपणगं चक्की पण केसवो य चक्की य। केसव चक्की केसव दुचक्कि केसी य चक्की य ॥६३॥ जिण चक्कीदुग
अड जिण जिणहरिपण दुचक्किकतिजिण हरि चक्की। हरि जिण जिण जिणचक्की चक्कि चक्किजिण हरिचक्की जिणा ॥६४॥
हरिजिट्ठभायरो नव बलदेवा अयल विजय भद्दा य। सुप्पभ सुदंसणाऽऽणंद नंदणा राम बलभद्दा ॥ ६५ ॥ बलजणणीओ भद्दा
सुभद्द सुप्पह सुदंसणा विजया। विजयंती य जयंती अपराजिय रोहिणी चेव ॥६६॥ हरिअद्धंतपुराईबला बला नीलवसण ताल-

झया। हलमुसलवामकुंडलमणिमालारयणी सेयतणू ॥६७॥ पंचासी पन्नत्तरि पणसट्ठी पणपन्न सत्तरसमलक्खा। पणसि पणट्ठी पनरस सहस सय बारसबलाऊ ॥६८॥ अट्ठ बलदेव सिद्धा नवमो उ दसायराउ बंभ चुओ। नियभायकण्हजियअममतित्थि इह सिज्झिही भरहे ॥६९॥ चउपन्नुत्तमपुरिसा इह एवं हुंति जीवपन्नासं। नवपडिविण्हूहि जुआ तेसट्ठि सलागपुरिस भवे ॥७०॥ इह आसगीय तारग मेरय महु केढवे निसुंभे य। बलि पल्हाए रावण जरसिंधू हुंति पडिविण्हू ॥७१॥ पुव्वुत्तहरीण अरी एए बल-सामिणो य चक्कधरा। पज्जंतसमयंमि य चक्कि हरिहया नरयमुवयंति ॥७२॥ भणियं च—"अनियाणकडा रामा सव्वेविय केसवा नियाणकडा। उड्ढंगामी रामा केसव सव्वे जहोगामी ॥७३॥ पणपंती तीसघरा तिरि उड्ढं छ चउतीसरेहाहिं। आइघरपणगि अरिहंत चक्की हरि नाममाणाउ ॥ ७४ ॥ आइमपंतीइ जिणा पनरस दो सुन्न तिजिण सुन्नतिगं। दोन्नि जिणा सुन्नजिणा सुन्नजिणो सुन्न जिण सुन्नं ॥७५॥ बीयाइ दुचक्की सुन्न तेर पण चक्कि सुन्न चक्की य। दोसुन्न चक्किसुन्नं दुचक्किसुन्नं चक्किदुसुन्नं ॥७६॥ तियपंती दस सुन्नं केसवा पंच पंच सुन्न हरी। सुन्नं हरि दोसुन्ना हरि दोसुन्ना हरि तिसुन्ना ॥७७॥ भरहुसहा सगराऽजिय समग मुणिपउम नेमिहरिसेणा। सिज्जंसाइतिवट्ठाइ पणसमं नेमिकण्हा य ॥७८॥ अडसंभवाइ संति चितिग मल्लिपासदुगपिहुघरा एए। तिचउ अडिगार बारस चक्क छसगट्ठमहरी य ॥७९॥ मघवसणं धम्मतित्थे अरनमिनेमीण सुसुम जय बंभा। अरतित्थि पुरिस-पुंडरिय दत्त लक्खणसुवयतित्थे ॥८०॥ पणसय धणुपन्नऽट्ठसु दस पंचसु पण अढाइ एगूणा। चत्तपणतीसतीसे गुत्तीस अडवीस छव्वीसा ॥८१॥ पणवीस तीस सोलस पनरस बार दस सत्त धणूणि नव। सगरयणी तणुमाणं दुतीसघर एस तह आऊ ॥८२॥ चुलसी विसयरि सट्ठी पंन चत्ता तीस वीस दस दु इगं। पुव्वलक्ख वरिसलक्खा चुलसी बिहत्तर सट्ठि तीस दस ॥ ८३ ॥

पणतिगलक्खु महसा पणनवई चुलसी पणसट्ठी सट्ठी य । छप्पन्न पणपन्ना तीस वार दस तिन्नि इग सहसा ॥८४॥ सयसत्तएगु हरि सविस विहत्तरि एवमिह समासेणं । उत्तमनरपंचासी सिरिवि ॥णंदसूरिथुया ॥८५॥ इय गुणसट्ठिजियाणं इमाण तेसट्ठिसलागपुरिसाणं । चउपन्नुत्तमपुरिसा सोउमइहरिसिओ हियए ॥८६॥ (ग्रत्यन्तरे अरिहंत१ सिद्ध२ पवयण३ गुरु४थेर५ बहुस्सुए६ तवस्सीसु७ वच्छल्लया य एसिं अभिक्खनाणोवओगे८य ॥८७॥ दंसण९ विणए१० आवस्सए११ य सीलवए१२ निरइयारो । खणलव१३ तव१४च्चियाए१५ वेयावच्चे१६ समाही१७य ॥८८॥ अप्पुव्वनाणगहणे१८ यभत्ती१९पवयणे पभावणया २० । एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो ॥८९॥" अह नरवइणा पुट्ठो जिण चक्की इत्थ भाविणो भयवं ! । इय कहइ तहा य अपुच्छिएवि बलविण्हुपडिविण्हू ॥९०॥ तथाहि–होही अजिओ संभव अभिनंदण सुमइ पउमपह सुपासो । चंदप्पह सुविहि सीयल सिज्जंसो वासुपुज्जो अ ॥९१॥ विमल अणंतइनाहो धम्मो तह संति कुंथु अर मल्ली । णिसुव्वय नमि नेमी पासो चउवीसमो वीरो ॥ ९२ ॥ होही सगरो मघवं सणंकुमारो य संति कुथु अरो। चक्की सुभूम महपउम तहय हरिसेण जय बंभा ॥९३॥ अयले विजये भद्दे, सुप्पभे य सुदंसणे । आणंदे नंदणे पउमे, रामे य नवमे बले ॥९४॥ विण्हू–तिविट्ठू य सयंभू , पुरिसुत्तमे पुरिससीहो । तह पुरिसपुंडरीए, दत्ते नारायणे कण्हे ॥९५॥ आसग्गीवे तारय मेरय महु केढवे निसुंभे य । बलि पल्हाय दसासिरे पडिविण्हू तह जरासिंधू ॥९६॥ गुणसट्ठिजियाण इमाण कहइ तेसट्ठिसलागपुरिसाणं । पियमाइपुरपमाणाउवण्णपरियायगुत्तगई ॥९७॥) पुण भणइ निवो नणु पहु ! इमीइ सुरअसुरमणुयपरिसाए । सो अत्थि जिओ जो इहऽवसप्पिणीए जिणो होही ? ॥ ९८ ॥ भणइ पहू तुह पुत्तो पढमपरिव्वायगो मरीइ इमो । होही चउवीसइमो तित्थयरो इह महावीरो ॥९९॥ पढमो य वासुदेवो तिविट्ठुनामेण पोयणा-

हिवई। मूकापुरीइ चक्की पियमित्तो तं (मह) विदेहेसु ॥१००॥ तं वयणं सोऊणं राया अंचियतणूरुहसरीरो। अभिवंदिऊण पियरं मरीइमभिनंदिउं जाइ ॥ १०१ ॥ तं भणइ गंतुमिय ते न य वंदे चक्किअद्धचक्कित्तं। नवि ते पारिव्वज्जं वंदे न इमं च ते जम्मं ॥१०२॥ किंतु जमुत्तो ताएण तंसि चरिमो जिणो महावीरो। इण्हिंपि तुज्झ वंदे तं अरिहत्तं तिजयऽपुव्वं ॥१०३॥ यदागमः— "सो विणएण उवगओ काऊण पयाहिणं च तिक्खुत्तो। वंदइ अभित्थुणंतो इमाहिं महुराहिं वग्गूहिं ॥१०४॥ लाभा हु ते सुलद्धा जंसि तुमं धम्मचक्कवट्टीणं। होहिसि दसचउदसमो अपच्छिमो वीरनामोत्ति ॥ १०५ ॥ एवं ण्हं थोऊणं काऊण पयाहिणं च तिक्खुत्तो। आपुच्छिऊण पियरं विणीयनयरिं अह पविट्ठो ॥१०६॥ श्रुत्वैवं भरताधिपेन विहिता द्रव्यार्हतो वंदना, श्रीनाभिप्रभव-प्रभोर्वचनतश्चाष्टापदे स्थापनाम्। तद्भो भव्यजनास्त्रिकालभविनामेषां सदा वंदनां, कुर्वीध्वं प्रतिमाश्च भावजनिताध्यारोपतो यत्नतः ॥१०७॥ इति भरतकथा ॥ तदेवं द्रव्यार्हतां नमस्करणीयत्वात् भाष्यकारादिभिः समर्थितत्वादावश्यकचूर्णिकृद्व्याख्यातार्थ-त्वाद् संवेगादिकारणत्वात् सम्यक्त्वनैर्मल्यहेतुत्वादशठबहुबहुश्रुतपूर्वाचार्याचरितत्वात् जीतकल्पानुपातित्वाच्च युक्तेयं जे य अइ-येति गाथेति। 'एष द्रव्यार्हद्वंदनार्थं द्वितीयोऽधिकारः, शक्रस्तवविवरणं समाप्त'मिति चूर्णिः, एवं शक्रस्तवाख्यप्रथमदंडकेन भावद्रव्यार्हतोऽभिवंद्य स्थापनार्हद्वंदनार्थमुत्थाय साधुः श्रावको वा चैत्यस्तवदंडकं विधिवद् भणति, उक्तं च—"उट्ठिय जिणमुद्दा-ठियचलणो विहियकरजोगमुद्दो य। चेइयगयथिरदिट्ठी ठवणाजिणदंडयं पढइ ॥ १ ॥ (३३२)" तत्रास्य संपद्गतपदसंख्याद्य-पदपरिज्ञानार्थमाह—

दुछसगनवतियछचउछप्पय चिइसंपया पया पढमा। अरिहं वंदण सद्धा अन्न सुहुमा एव जा ताव ॥३७॥

अक्षरघटना प्राग्वत्, भावार्थस्त्वयं–अरिहंतचेइयाणमित्याद्यपदद्वयप्रमाणा प्रथमा संपत्, वंदणवत्तियाए इत्यादिपदषट्क-परिमाणा द्वितीया संपत्, सद्धाए इत्यादि सप्तपदमाना तृतीया संपत्, अन्नत्थ ऊससिएणमित्यादिपदनवकनिर्मिता चतुर्थी संपत्, सुहुमेहिं इत्यादिपदत्रययुता पंचमी संपत्, एवमाइएहिं इत्यादिपट्पदपूरिता षष्ठी संपत्, जाव अरिहंताणमित्यादिपदचतुष्कप्रमाणा सप्तमी संपत्, ताव कायमित्यादिपदषट्कघटिताऽष्टमी संपत् इति। अथ सूत्रं विव्रियते, तच्चेदम्–'अरिहंतचेइयाण'मित्यादि, नरादिकृतं वंदनपूजनादि सिद्धिगतिं च अर्हतीत्यर्हतः, यदागमः–"अरहंति वंदणनमंसणाणि अरिहंति पूयसकारं। सिद्धिगमणं च अरिहा अरहंता तेण वुचंति ॥१॥" यद्वा–नत्थि य रहो य छन्नं अंतो य खउत्ति जेसिं नाणस्स। ते अरहंता जं वा न रहंति भवे न चिट्ठंति॥१॥"त्ति, तेषां चैत्यानि–प्रशस्तचित्तसमाधिजनकानि बिंबानि अरिहंतचेइआणि, जिनसिद्धप्रतिमा इत्यर्थः, तथा चावश्यकचूर्णिः–"सिद्धाई अरहंता, चेइआणि य तेसिं चेव प्रतिकृतिलक्षणानि"इत्यादि, एतावता च सिद्धप्रतिमानामप्यग्रेऽयं दंडको भणनीय इत्यायातं, तेषां किं?–'करेमि काउस्सग्गं' करोमीत्याद्याभ्युपगमं दर्शयति, कायो–देहस्तस्योत्सर्गः–स्थान-मौनध्यानक्रियां विना अन्यक्रियामाश्रित्य परित्यागस्तं, कायेन क्रियांतरं न करोतीत्यर्थः २ संपत्, जिनादिप्रतिमानां किमर्थं कायोत्सर्गः क्रियत इत्याह–'वंदणवत्तियाए'इत्यादि, वंदनं–नमनस्तवनानुचिंतनादिप्रशस्तकायवाङ्मनःप्रवृत्तिस्तत्प्रत्ययं-तन्नि-मित्तमिति तत्फलं, यादृग्वंदनात् कर्म्मक्षयादि फलं स्यात् तादृग् कायोत्सर्गादेव मे भूयादित्यर्थः, एवं सर्वत्र भाव्यं, वत्तियाएत्ति आर्षत्वात्सिद्धं १,'पूयणवत्तियाए' पूजनं–गंधमाल्यादिभिरभ्यर्चनं, उक्तं चोमास्वातिवाचकमुख्येन–'पूजा च गंधमाल्या-धिवासधूपप्रदीपाद्यैः" तत्प्रत्ययं, 'सक्कारवत्तियाए' सत्कारः–प्रवरवस्त्राभरणादिभिरलंकरणं तत्प्रत्ययं, नन्वत्र पूजासत्कारौ

द्रव्यस्तवत्वात् साधोः छज्जीवकायसंजमो इत्यादिवचनप्रामाण्यात् कथं नानुचितौ ?, श्रावकस्य तु 'विहवस्स फलं सुपत्तविणिओगि'त्ति वचनात् द्रव्यस्तवप्रधानतया साक्षात् ते कुर्वतः कायोत्सर्गद्वारेण तत्प्रार्थने कथं न नैरर्थक्यं ?, उच्यते, साधोर्द्रव्यस्तवनिषेधः स्वयं करणमाश्रित्य, नतु कारणानुमती, यतः—'अकसिणपवत्तगाण'मित्याद्युपदेशदानतः कारणसद्भावः भगवतां च पूजादिदर्शनतः प्रमोदादिनाऽनुमतिरपि, भणितं च—"पूयाफलपरिकहणा पमोयणा चोयणाउ कारवणं। अणुमोयणावि जायइ पमोयउववूह ईहिं ॥ १ ॥ ( ४११ वृ० ) सुव्वइ य वइररिसिणो कारवणंपिय अणुट्ठियमिमस्स। वायगगंथेसु तहा एयगया देसणा चेव ॥१॥ जह सप्पभए माया सुयस्स गत्ताउ कड्ढणोवायं। लहु अन्नं अलहंती घिंसंतीविहु न दोसिल्ला ॥२॥ तह दोसवन्न साहू गिहिणो दव्वत्थयं उवइसंतो। बहुपावइंदियत्थाइदोसनियरं निवारिंतो ॥३॥ जं पुण सुत्ते भणियं दव्वथए सो विरुज्झई कसिणो। तव्विसयारंभपसंगदोसविणिवारणत्थं तं ॥४॥ (४१४ वृ०) श्रावकस्य भावस्तवांगतया सदारंभरूपत्वेन यथाविभवं तौ संपादयतोऽपि भक्त्यतिशयादाधिक्यसंपादनार्थं प्रार्थयमानस्य न नैरर्थक्यं, जिनपूजादिकारणाकांक्षातिरेकस्वभावत्वात् श्रावकधर्मस्य, श्रूयते च—सुश्रावकाणां सिद्धांतादिषु भानुश्रेष्ठिन इव पुष्पप्रदीपादिभिर्द्रव्यपूजां विधाय स्तुत्यादिभिर्भावपूजायां प्रवृत्तिरिति, भानुश्रेष्ठिकथा त्वियम्—तेणं कालेणं तेणं समएणं चंपा नामं नयरी होत्था, वण्णओ, तत्थ णं चंपाए नयरीए भाणू नामा सिट्ठी समणोवासओ परिवसइ, अड्ढे दित्ते वित्ते विउलभवणसयणासणजाणवाहणाइण्णे बहुधणबहुजायरूवरयए आओगपओगसंपउत्ते विच्छड्डियपउरभत्तपाणे बहुदासीदासगोमहिसीगवेलगप्पभूए अहिगयजीवाजीवे उवलद्धपुण्णपावे आसवसंवरनिज्जरकिरियाहिगरणबंधमुक्खकुसले असहिज्जदेवासुरनागसुवण्णजक्खरक्खसकिंनरकिंपुरिसगरुलगंधव्वमहोरगाइएहिं देवगणेहिं निग्गंथाओ पवय-

णाओ अणइक्कमणिज्जे निग्गंथे पावयणे निस्संकिए निक्कंखिए निवितिगिच्छे लद्धट्ठे गहियट्ठे पुच्छियट्ठे अभिगयट्ठे अट्ठिमिंजपेम्माणुरागरत्ते अयमाउसो ! निग्गंथे पावयणे अट्ठे, परमट्ठे, सेसे अणट्ठे, ऊसियफलहे अवंगुयदुवारे २१ चियत्तंतेउरपरघरप्पवेसे चाउद्दसट्ठमुदिट्ठपुंनिमासिणीसु पडिपुन्नं पोसहं सम्मं अणुपालेमाणे २ समणे निग्गंथे फासुएसणिज्जेणं असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबलपायपुच्छणेणं ओसहभेसज्जेणं पाडिहारिएण य पीढफलगसिज्जासंथारएणं पडिलाहेमाणे २ बहूहिं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासेहिं अप्पाणं भावेमाणे विहरइ' इत ऊर्ध्वं वसुदेवहिंडिअक्षराणि लिख्यंते—"तस्स णं तुल्लकुलसंभवा भद्दा नामं भारिया हुत्था, सा उच्चप्पसवा, सा सुतमलभमाणी देवयनमंसणतवस्सिपूयणनिरया पुत्तत्थिणी विहरइ, कयाइं च सिट्ठी सह घरणीए जिणपूयं काऊण पज्जालिएसु दीवेसु पोसहिओ दब्भसंथारगओ थयथुइमंगलपरायणो चिट्ठइ, भयवं च ससंगयणचारी अणगारो चारुनामा ओवइओ, सो कयजिणसंथवो कयकायविउस्सग्गो आसीणो सिट्ठिणा पच्चभिण्णाओ, तओ सब्भुट्ठिएण सायरं वंदिओ चारुमुणिणोत्ति भणंतेण, तेणवि महुरभणिएण भणिओ—सावग ! सुहसमाहाणोसि अविग्घं च ते भवउ वयविहीसुत्ति, सिट्ठिणा भणियं—तुम्ह चलणपसाएणं, तओ तित्थयरस्स नमिसामिणो चरियसंबद्धं कहं कहिउमारुद्धो, यथा—जंबुद्दीवे भरहे सावत्थीए निवो उ सिद्धत्थो। नंदगुरुं पडिलाहिय पव्वयइ इगारसंगधरो ॥१॥ वीसयराऊ पाणयकप्पा आसोयपुन्निमाय चुओ। मिहिलाए वप्पाविजयनिवसुओ नमिजिणो जाओ ॥२॥ सावणकसिणट्ठमीए नीलुप्पललंछणो सुवण्णाभो। कासवगुत्तो इक्खागवंसओ पणरसधणुच्चो ॥३॥ कुमरत्तं पणवीसं वाससए पण्ण पालिउं रज्जं। आसाढकसिणनवमी अवरण्हे देवकुरुसिवियं ॥४॥ चडिउं सहसंबवणे पव्वइओ छट्ठएण सहसजुओ। बीयदिणे वीरपुरे दिन्नो पारवइ परमन्नं ॥ ५ ॥ मिगसिरसिय-

इक्कारसीपुव्वण्हे बउलतरु अहो नाणं । छट्ठेणुप्पन्नं तो गंधारीमिउडिजक्खनओ ॥६॥ वीसं समणसहस्से काउं इगचत्त सहससमणीओ । सत्तरस गणहरेऽविय पणवीसं वाससयअंते ।७॥ संमेए सहसजुओ वग्घारियपाणि मासभत्तेण । पंचऽसिसणि सिद्धिगओ विसाहसियदसमिवररत्ते ॥८॥ कहंते य भाणुघरिणीए कयंजलीडडाए विण्णविओ भयवं ! अत्थि णे विउलो अत्थो, जो तस्स कुलसंताणहेऊ लोगदिट्ठिए सो णे पुत्तो हुज्जा ?, संदिसह, तुब्भे अमोहदंसी, तओ भयवया चारुमुणिणा भणियं—भद्दे ! भविस्सइ ते पुत्तो अप्पेणं कालेणंति वुत्तूण सावय ! अप्पमाई हुज्जा सीलव्वएसुत्ति गओ अदरिसणं, तओ केणइ कालेण घरिणीए आहूओ गब्भो, तिगिच्छगोवइट्ठेण भोयणविहिणा वड्ढिओ, अविमाणियदोहला य पसवसमए पयाया दारयं, कयजायकम्मस्स य नामकरणदिवसे कयं च से नामं गुरुणा चारुमुणिणा वागरिओ दारओ भवउ चारुदत्तोत्ति, गहियविज्जो य पिउणा सावयधम्मं गाहिओ, पणवयंससहिओ अच्छइ,कयाइं च कोमुइयचाउम्मासिणीए वासुपुज्जजिणाययणपुप्फारुहणनिमित्तं निग्गओ सवयंसो अंगमंदिरं उज्जाणं, तत्थ चेइअमहिमा वट्टइ, उवगओ अंगमंदिरं, पविट्ठा जिणाययणं, चेडेहिं उवणीयाणि पुप्फाणि, कयं अच्चणं पडिमाणं, थुईहिं वंदणं कयं,निग्गओ जिणभवणाउत्ति। जह अमियगइं खयरं कासि विसल्लं जहा परिणिओवि । सोयाइभोगविमुहो खित्तो दुच्छलियगुट्ठीए ॥११॥ दिण्ण वसु सोलकोडी वसंतसेणाइ वारवरिसंते । अक्काइ कड्ढिओ जह भमिओ देसेसु अत्थत्थं ॥ १२ ॥ तं चारुदत्तचरियं सव्वंपि धम्मरयणवित्तीओ । नेयं इह पुण पगयं पईवथुइमाइपूयाए ॥ १३ ॥ इय देसविहियदव्वचणादि भावचणो वणी भाणू । पडिवज्जियपव्वज्जो जाओ सज्जियसुगयकज्जो ॥ १४॥ स्तुत्यादेरिति भावपूजनमहं पुष्पप्रदीपादिभिः, सद्द्रव्यार्चनपूर्वमत्र विधिना श्रुत्वा कृतं भानुना । कुर्वीध्वं तदिदं विशुद्धमनसः श्रद्धादिभिर्वृद्धिभिः, भो भव्या ! उप-

सर्गवर्गहतये सद्बोधिलाभाय च ॥ १५ ॥ इति भानुश्रेष्ठिकथा ॥

तथा 'सम्माणवत्तियाए' सन्मानो—मानसप्रीतिपरिगतोचितविनयप्रतिपत्तिः, स्तवादिभिः सद्गुणोत्कीर्त्तनमित्यन्ये, अथ वंदनाद्याः किमर्थमित्याह—'बोहिलाभवत्तियाए' बोधिलाभः—प्रेत्यजिनधर्मावाप्तिस्तत्प्रत्ययं, यद्यप्ययं साध्वादेरस्त्येव तथापि क्लिष्टकर्मोदयवशेन बोधिलाभस्य प्रतिपातसंभवात्, जन्मान्तरे युक्तैवास्य प्रार्थना, किंतु प्राप्तभ्रष्टस्यापि ?, यत्प्राप्यत्वात् तस्य, संभवति चैवं भावातिशयेन रक्षणमपि, तदाशंसाऽपि किमर्थमित्याह—'निरुवसग्गवत्तियाए' निरुपसर्गो—जन्माद्युपसर्गरहितो मोक्षस्तत्प्रत्ययं, संपत् २ । अयं च कायोत्सर्गः श्रद्धादिभिर्विना क्रियमाणोऽपि नेष्टार्थसाधक इत्यत आह—'सद्धाए' इत्यादि, श्रद्धया—स्वाभिलाषेण, न परोपरोधबलाभियोगादिना १ मेधया—जिनोक्तमर्यादावर्तितया, नासमंजसतया, हेयोपादेयपरिज्ञानरूपया वा, नतु जडतया, हृदयपटुतयेत्यर्थः २ धृत्या—मनःस्वास्थ्येन, मनःसमाधिविशेषितप्रीत्येत्यर्थः, न तु रागाद्याकुलत्वेनान्यचित्ततया ३ धारणया—अर्हदादिगुणाविस्मरणरूपया, न तच्छून्यतया ४ अनुप्रेक्षया—अर्हद्गुणानामेव पुनःपुनश्चिंतनेन, न तद्वैकल्येन ५ वर्धमानया—वृद्धिं गच्छन्त्या, नानवस्थितया, प्रत्येकं चैतत् श्रद्धादिभिः संबध्यते, यथा वर्धमानया श्रद्धयेत्यादि, एवं चैषामुपन्यास इति लाभक्रमेण, यथा श्रद्धासद्भावे मेधा तत्सद्भावे धृतिरित्यादि, वृद्धिरप्यासामेवमेव, एवमेतैर्हेतुभिस्तिष्ठामि—करोमि कायोत्सर्गं स्थानादि, अन्यव्यापारवच्छरीरत्यागमित्यर्थः, इह यत् प्राक् करोमि कायोत्सर्गमित्युक्तं तत् 'सत्सामीप्ये सद्वद्वे'ति (हैं० ५-४-१) सूत्रात्, करोमि—करिष्यामीति क्रियाभिमुख्यमेवोक्तं, संप्रति त्वासन्नतरत्वात् अस्य करणमेवाह । 'अकए काउस्सग्गे नणु कयकरणंति भन्नए एत्थ । अइआसन्नत्तणओत्ति कज्जमाणं कडं जम्हा ॥ १ ॥' (४२५ अर्थतः) अनेनाभ्युपगमपूर्वं श्रद्धादि-

समन्वितं च सदनुष्ठानं भवतीति श्रद्धादिमानेव चास्याधिकारीति च दर्शितम् संपत्३ । किं सर्वथा कायोत्सर्गो ?,नेत्याह–'अन्नत्थ ऊससिएण'मित्यादि,अन्यत्र व्यापार इति शेषः, कायोत्सर्गं करोमि,कुतः ?–उच्छ्वसिताद्–ऊर्ध्वश्वासग्रहणात्, पंचम्यर्थे तृतीया, उच्छ्वासादन्यं व्यापारं न करोमीत्यर्थः१ उच्छ्वसितेन तु अभग्नोऽविराधितो भवेत् मम कायोत्सर्ग इति योगः,एवमुत्तरत्रापि योज्यं, निःश्वसितात्–श्वासमोक्षणात्२ कासितात्३ तात्४ प्रतीतावेतौ, जृंभायितात्–विवृतवदनस्य प्रबलवातनिर्गमात् ५ उद्गायितात्–वातोद्गारितात् ६ वातनिसर्गाद्–अधोनिर्गमात् ७, कासितादिषु च जीवादिरक्षार्थं मुखे हस्तदानादियतना कार्या, 'भमलीए' अकस्माद्देहस्य भ्रमणान्निपतनाद्वा८ 'पित्तमुच्छाए' पित्तसंक्षोभाद् मूर्च्छा–ईषन्मोहो,भ्रमसहितं चैतन्यमित्यर्थः,पित्तमूर्च्छा तस्याः९, एतयोः सत्योरुपवेष्टव्यं, मा भूत् सहसा पतने संयमात्मविराधनेति, संपत् ४। 'सुहुमेहिं'त्यादि, सूक्ष्मेभ्यः–अल्पेभ्यो लक्ष्यालक्ष्येभ्य इत्यर्थः अंगसंचारेभ्यः–रोमोत्कंपादिभ्यः, सूक्ष्मेभ्यः खेलसंचालेभ्यः खेलः–श्लेष्मा तच्चलनेभ्यः, सूक्ष्मेभ्यो दृष्टिसंचारेभ्यो–निमेषादिभ्यः,संपत् ५। एवमाइएहिं'त्यादि,एवं–पूर्वोक्तप्रकारा आकारा आदिर्येषामग्न्यादिस्पर्शनपंचेन्द्रियच्छेदनचौरादिसंभ्रमसर्पदशनाद्यन्यापवादानां ते एवमादिकास्तैः, तत्राग्न्यादिस्पर्शने प्रावरणं गृह्णतोऽन्यतो वा गच्छतोऽपि मार्जारादेः पुरतो गमनेऽग्रतः सरतोऽपि हस्तं वा पुरः कुर्वतोऽपि राजचौरादिसंभ्रमे पलायमानस्यापि अस्थानेऽपि च नमस्कारमुच्चारयतोऽपि सर्पदष्टे आत्मनि परे वा साध्वादौ अपूर्णमपि कायोत्सर्गं पारयतोऽपि न भंगः,यदागमः–"अगणीओ छिंदिज्ज व बोहीखोभाइ दीहडक्को य। आगारेहिं अभग्गो उस्सग्गो एवमाईहिं ॥१॥" किमुक्तं भवति ?–एतैरुच्छ्वसितादिभिराकारैः–छिंडिकाभिरभग्नः–सर्वथा अखंडितः अविराधितो–देशतोऽप्यविनाशितः भवेन् मे–मम कायोत्सर्गः,संपत्६। सर्वोपाधिविशुद्धं धर्म्मानुष्ठानं निःश्रेयसनिबन्धन-

मिति ज्ञापनार्थं इहाकारोपन्यासः यथार्थः, 'वयभंगे गुरुदोसो०' इत्यादि, कियंतं कालं यावत् तिष्ठामीत्याह—'यावदि'ति काल- प्रमाणावधौ, यावता कालेनेत्यर्थः, अरिहतां भगवतां संबंधिना नमस्कारेण—'अरिहंताणं' इत्युच्चाररूपेण न पारयामि—न पारं गच्छामि कायोत्सर्गस्येति शेषः, तावत् किमित्याह—'तावे'त्यादि, तावंतं कालं यावत् कायं—देहं स्थानेनोर्ध्वस्थानादिप्रकारेण कृत्वा एवं मौनेन—वाग्निरोधन ध्यानेन—नमस्कारादिशुभवस्तुचिंतनादिजनितमनःसुप्रणिधानेन 'अप्पाणं'ति आर्षत्वादात्मीयं कायं व्युत्सृजामि—स्थानादि मुक्त्वा शेषव्यापारनिषेधेन त्यजामि। इयं अत्र भावना—नमस्कारपाठं यावत् ऊर्ध्वस्थानादिः प्रलंबभुजो निरुद्धवाक्प्रसरः प्रशस्तध्यानानुगतस्तिष्ठामीति ८ संपत्। ततोऽष्टोच्छ्वासमानं कायोत्सर्गं करोति, अभ्येष्यति च 'ऊसास अट्ठ सेसेसु'त्ति, कायोत्सर्गे एकोनविंशतिर्दोषाः वर्ज्याः, तथाहि—नाश्ववद् विषमपादस्तिष्ठेत् १ वाताहतलतावत् न कम्पेत् २ स्तम्भे कुडचे वा नावष्टभ्नीयात् ३ माले नोत्तमाङ्गं निदध्यात् ४ अवमनसवरीवत् नाग्रे करौ कार्यौ ५ नववधूवन्नावनाम्यं शिरः६ निगडितवत् पादौ न विस्तार्यौ, न वा मेळनीयौ ७ नाभेरुपरि जानुनोः अधश्च प्रलंबमानं निवसनं न विदध्यात् ८ दंशादिरक्षार्थं अज्ञानाद्वा हृदयं न प्रच्छाद्यं ९ शकटोर्धिवद् अंगुष्ठौ पाणी वा न मीलयेत् १० संयतीवत् न प्रावृणुयात् ११ कवीकवन्नाग्रे रजोहरणं कार्यं १२ चलचित्तवायसवत् चक्षुर्गोलकौ न भ्राम्यौ १३ कपित्थवत् परिधानं न पिंडयेत् १४ यक्षाविष्टवत् न शिरः कम्पनीयं १५ मूकवत् न हूहूकुर्यात् १६ आलापकादिसंख्यानार्थं नाङ्गुली भ्रुवौ वा चालयेत् १७ सुरावत् न बुडबुडयेत् १८ अनुप्रेक्षमाणो वानरवत् न ओष्ठौ चालयेदिति १९, अत्र गाथाः—घोडग १ लय २ थंभाई ३ माल ४ वहू ५ सबरि ६ नियलि ७ थण ८ खलिणे ९। लंबुत्तरु १० द्धि ११ संजइ १२ भमुहंगुलि १३ वायस १४ कविठ्ठे १५ ॥१॥ सिरकंप १६ मूय १७ वारुणि

१८ पेह१९त्ति चइज्ज दोस उस्सग्गे। लंबुत्तर १ थण २ संजई ३ न दोस समणीण सढ्ढीणं ॥ २ ॥ ततो 'नमो अरिहंताणंति भणित्वा पारयति, स्तुतिं च पठति, अत्र भाष्यं—अट्ठुस्सासपमा उस्सग्गा सव्व एव कायव्वा। उस्सग्गसमत्तीए नवकारेणं तु पारिज्जा ॥१॥ परिमिट्ठिनमुक्कारं सक्कयभासाइ पुण भणइ पुरिसो। चरिमाइमथुइ पढमं पाययभासाइवि न इत्थी ॥२॥ जइ एगो देइ सयं अह बहवे ता थुइं पढइ एगो। सेसा उस्सग्गठिया णंति जा सा परिसमत्ता ॥३॥ बिंबस्स जस्स पुरओ पारद्धा वंदणा थुई तस्स। चेइयगेहे सामन्नवंदणे मूलबिम्बस्स ॥४॥ इत्थ य पुरिसथुईए वंदइ देवे चउविहो संघो। इत्थीथुइए दुविहो समणीओ साविया चेव ॥५॥ (बृ०४९८ तः ५०१) व्याख्यातं वंदनाकायोत्सर्गसूत्रं, एष स्थापनार्हद्वंदनाख्यस्तृतीयोऽधिकारः, द्वितीयो दंडकः। स्तुत्यनंतरं चास्यामेवावसर्पिण्यां ये भारते तीर्थकृतोऽभूवंस्तेषामेवैकक्षेत्र वासादिनाऽऽसन्नतरोपकारित्वेन नामोत्कीर्त्तनाय चतुर्विंशतिस्तवं पठति, तत्र प्रथमस्य लाघवार्थं च श्रुतस्तवादेरप्येकयैव थया संपदादिप्रमाणमाह—

मथयाइसु पय पयसम अडवीस सोल वीस कमा।
अदुरुत्त वन्न दोसट्ठ १ दु य गोल२ट्ठ नउय यं ३ ॥ ३९ ॥

नामस्तवः—चतुर्विंशतिस्तवः आदिशब्दात् श्रुतस्तवसिद्धस्तवग्रहः, एषु दंडकेषु संपदो—विश्रामाः पदसमाः—श्लोकादिचतुर्थभागस नाः, यावन्ति पदानि तावन्त्य एव संपदः, अष्टाविंशतिर्नामस्तवे एकश्लोकगाथापद्कमानत्वात् १, षोडश श्रुतस्तवे गाथाद्वयवृत्तद्वयरूपत्वात् २ विंशतिः सिद्धस्तवे गाथापंचकप्रमाणत्वात् ३, तत् क्रमात्—यथाक्रमं, तथा अद्विरुक्ताः ये एकवेलया गणितास्ते पुनर्न गण्यंते इति भावः, वर्णा—अक्षराणि दंडकत्रये क्रमेण भवंति, तत्र द्वे शते षष्ट्यधिके नामस्तवदंडके, सव्वलोए इत्य-

क्षरचतुष्कप्रक्षेपात्, अग्रेतनवर्णानां अर्हच्चैत्यस्तवे गणितत्वाद् अद्विरुक्ता इति प्रतिज्ञानाच्च, एवमग्रेऽपि भाव्यं १, तथा द्वे शते षोड धिके श्रुतस्तवदंडके सुअस्स भगवओत्ति सप्ताक्षरसहितगणनात् दंडकांतःपातित्वादेषां २, तथा अष्टनवत्यधिकं शतं सिद्धस्तवदंडके, सम्मदिट्ठिसमाहिगराणमिति यावत्, पंचाधिकारप्रमाणत्वात् पंचमदंडकस्य, 'सिद्धथवे पंच अहिगारा' इति वचनात् शेषभावना प्राग्वत्, अथ सूत्र व्याख्या-तत्र नामस्तवसूत्रमिदं-'लोगस्स उज्जोअगरे' इत्यादि, लोकस्य-धर्माधर्माकाशजीवपुद्गलेतिपंचास्तिकायात्मकस्य उद्योतकरान्-केवलालोकेन तत्पूर्वकवचनदीपेन वा प्रकाशनशीलान्, अनेन वचनातिशय उक्तः, लोकोद्योतकरत्वं च तच्छ्रा(स्ता)वकानामुपकाराय, न चानुपकारिणः कोऽपि स्तौतीत्युपकारित्वप्रदर्शनार्थायाह-'धर्मतीर्थकरान्' धर्मः-श्रुतचरणात्मकस्तत्प्रधानं तीर्थं नद्यादेः शाक्यादेश्चाधर्मबहुलस्य द्रव्यतीर्थस्य निरासेन भवार्णवोत्तारकं संघादि भावतीर्थं, आह च-कुप्पवयणाइ नइआइ तरणसमभूमि दवओ तित्थं। वुड्डंति तत्थवि जओ संभवइ य पुणवि उत्तरणं १॥ संघाइ भावतित्थं जं तत्थ ठिया भवण्णवं नियमा। भविया तरंति नय पुणवि भवजलो होइ तरियव्वो ॥२॥" तत्करणशीलान्, एतेन पूजातिशयश्चो :,अपायापगमातिशयमाह-'जिनान्' रागादिजेतॄन्, अर्हतः अष्टमहाप्रातिहार्यादिपूजार्हान्, विशेषणपदमेतत्,कीर्त्तयिष्यामिस्वनामभिः स्तोष्ये, चतुर्विंशतिं भरतक्षेत्रोद्भवान्, अपिशब्दात् भावतः शेषक्षेत्रसंभवांश्च, ते च राज्यावस्थासु द्रव्यार्हतोऽपि भवंतीति भावार्हत्प्रतिपादनायाह-'केवलिनः' उत्पन्नकेवलज्ञानान्, भावार्हत इत्यर्थः, एतेन ज्ञानातिशयमाह, एवं च सर्वस्वपरसंपत्सर्वस्वकल्पातिशयचतुष्टयोपेतानर्हतः स्तोष्यामीत्यावेदितं भवति। यदुक्तं 'कीर्त्तयिष्यामी'ति तत् कुर्वन् गाथात्रयमाह-'उसभे'-त्यादि, सुगमाः, नामार्थस्तु सामान्यतो विशेषतश्चोच्यते, तत्र सामान्यत 'उसहो'त्ति दुर्वहसंयमधुरोद्वहनाद् वृषभ इव वृषभः,

वृषेण—धर्म्मेण वा भातीति वृषभः, वर्षति—सिञ्चति वा देशनाजलेन दुःखाग्निना दग्धं जगदिति वृषभः, यद्वा ऋषति—ग ति परमपदमिति ऋषभः, एवं सर्व्वेऽप्यर्हंतो वृषभाः, प्रथमजिने को विशेषः ?, उच्यते, ऊर्वोरन्योऽन्याभिमुखधवलवृषभयुगललाञ्छनत्वात् मातुश्चतुर्द्दशस्वप्नेषु पूर्व्वं वृषभदर्शनाच्च वृषभः१ एवं सर्वेष्वपि भावनीयं, तत्र परीषहादिभिरजित इत्यजितः गर्भस्थेऽस्मिन् जननी द्यूते राज्ञा न जितेत्यजितः२ संभवन्ति चतुस्त्रिंशदतिशया अ न्निति शं—सुखं भवत्यस्मिन् श्रुते वेति संभवः गर्भस्थेऽस्मिन् पृथ्व्यामधिका सस्यसंभूतिर्जातेति संभवः३ अभिनंद्यते देवेंद्रादिभिरित्यभिनंदनः, गर्भात्प्रभृत्येवाभीक्ष्णं शक्रेणाभिनंदित इत्यभिनंदनः ४ शोभना मतिरस्येति सुमतिः गर्भस्थेऽस्मिन् सपत्नीद्वयविवादच्छेदात् निपु मातुर्मतिरभूदिति सुमतिः ५

अत्र संप्रदायः—अचिरागयवणिमरणे दुण्ह सवत्तीण दारओ एगो। बालग्गहणविवाओ जाओ सिं मेहनिवपुरओ ॥१॥ जा केणवि न मुणिज्जइ अमुगीइ सुओ इमोत्ति ता रण्णो। विन्नवियं दासीए जह नाह! विणस्सई भत्तं ॥ २ ॥ तइयंपिहु विन्नविओ भणइ निवो सरइ भोयणं देवी। न मुणइ मइरहियंति य रज्जं विप्फुरिहिइ अ अयसे ॥३॥ दासीमुहाउ नाउं तयं तओ मंगलाइ देवीए। आगम्म सहामज्झे इय ताओ दोऽवि भणियाओ ॥ ४ ॥ रायंगणंमि चिट्ठह एसो अहिणवसमुग्गय असोओ। पुत्तो य मज्झ उदरे अत्थि महाबुद्धिसंपन्नो ॥५॥ एसो जोव्वणपत्तो इमस्स वरपायवस्स छायाए। एयं तुम्ह विवायं छिंदिस्सइ नेत्थ संदेहो ॥६॥ तत्तियमित्तं कालं ता चिट्ठह ताव निव्वुया तुब्भे। पडिवन्नममायाए माया न खमइ मुहुत्तंपि॥७॥ भणइ य पिऊइ गेहं एवं दोण्हं विभिन्नचित्ताणं। जं वा तं वा दाउं अप्पिज्जउ देवि! मम पुत्तो ॥ ८ ॥ एसा सगित्ति नाउं पुत्तो वित्तं च तीएँ दिन्नाइं। निद्धाडिया य इयरी रन्ना अलियत्ति कुविएण ॥९॥ गब्भगए जं जाया मंगलदेवीए एरिसा सुमई। तुट्ठेण तओ रण्णा जिणस्स

सुमई कयं नामं ॥१०॥ निष्पंकतामाश्रित्य पद्मस्येव प्रभाऽस्येति पद्मप्रभः,गर्भस्थे प्रभोर्मातुः पद्मशयनदोहदो देवतया पूरित इति
पद्मवर्णश्चेति पद्मप्रभः६ शोभनानि पार्श्वानि अस्येति सुपार्श्वः गर्भस्थेऽस्मिन् माताऽपि सुपार्श्वा जातेति सुपार्श्वः७ चंद्रवत् सौम्या
प्रभाऽस्येति चंद्रप्रभः, गर्भस्थेऽस्मिन् मातुश्चंद्रपानदोहदोऽभूदिति चंद्रप्रभः८ शोभनो विधिरस्येति सुविधिः गर्भस्थेऽस्मिन् माताऽपि
सर्वविधिषु कुशला जातेति सुविधिः९ समस्तसत्त्वानामांतरतापोपशमकत्वात् शीतलः गर्भस्थेऽस्मिन् पितुः पूर्वोत्पन्नोऽचिकित्स्यः
पित्तदाहो राज्ञीकरस्पर्शादेवोपशांत इति शीतलः१० विश्वस्यापि श्रेयान् हितकर इति श्रेयांसः गर्भस्थेऽस्मिन् केनाप्यनाक्रांतपूर्वा
देवताधिष्ठिता शय्या जनन्या आक्रांता श्रेयश्च जातमिति श्रेयांसः ११ वसवो–देवविशेषास्तेषां पूज्यो वसुपूज्यः, स एव वासु-
पूज्यः, गर्भस्थेऽस्मिन् वसूनि–रत्नानि तैरभीक्ष्णं वासवो राजकुलं पूजितवान् वसुपूज्यस्य गोत्रापत्यमिति वा वासुपूज्यः१२ विम-
लानि ज्ञानादीन्यस्येति विगतमलो वा गर्भस्थेऽस्मिन् मातुर्मतिस्तनुश्च विमला जातेति विमलः १३

अत्र संप्रदायः–पइमरणंमि सवत्तीदुगस्स कयवम्मनिवपुरो जाए। पुत्तग्गहणविवाए सामादेवीइ तं नाउं ॥१॥ आणाविय
सहमज्झे पुत्तस्सऽद्धे दवाविउं सुत्तं। आणावइ करवत्तं ता जणणी भणइ किमिणंति ॥२॥ देवी जंपइ दाहं पुत्तं वित्तं च णे दुहा काउं।
पडिवन्नममायाए मायाए जंपियं देवि! ॥३॥ मा माऽऽणवेसु देवि! एवं पुत्तंपि वित्तमेयाए। अप्पेह मज्झ पुत्तं जीवंतं जेण पिच्छामि
॥४॥ तो विमलनिश्चमईए सामा नाऊण तासि परमत्थं। छिंदइ तं ववहारं पुव्वुत्तकमेण नीसेसं ॥६॥ एवं विमलं बुद्धिं कयवंमन-
राहिवेण नाऊण। एसो गब्भपभावो सुयस्स विमलो कयं नामं ॥७॥ अनंतकर्मांशजयादनंतानि वा ज्ञानादीन्यस्येति अनंतः गर्भ-
स्थेऽस्मिन् मात्रा रत्नखचितमनंतं महत्प्रमाणं दाम स्वप्ने दृष्टमित्यनंतः १४ दुर्गतौ पतंतं सत्त्वसंघातं धारयतीति धर्म्मः, गर्भस्थे-

ऽस्मिन् माता दानादिधर्म्मपरा जातेति धर्म्मः१५,शांत्यात्मकत्वात्तत्कर्तृत्वाद्वा शांतिः अस्मिन् गर्भस्थे पूर्वोत्पन्नाशिवस्य शांतिर्जातेति शांतिः १६ कौ-पृथिव्यां स्थितवानिति निरुक्तात् कुंथुस्तूपं दृष्टवतीति कुंथुः १७ 'सर्वो नाथ मह चवः, कुले य उपजायते। तस्याभिवृद्धये वृद्धैरसावर उदाहृतः ॥१॥ इत्यरः, गर्भस्थेऽस्मिन् मात्रा सर्वरत्नमयोऽरो दृष्ट इत्यरः १८ परीषहादिमल्लजयान्मल्लिः, आर्षत्वादिकारः, गर्भस्थेऽस्मिन् मातुः सर्व्वर्तुककुसुममालाशयनीये दोहदो देवतया पूरित इति मल्लिः१९ मन्यते जगतस्त्रिकालावस्थामिति मुनिः सुष्ठु व्रतान्यस्येति सुव्रतः, मुनिश्चासौ सुव्रतश्चेति मुनिसुव्रतः,गर्भस्थेऽस्मिन् माता मुनिरिव सुव्रता जातेति मुनिसुव्रतः२० परिषहादिनामनान्नमिः, जन्ममहेऽस्मिन् प्रत्यंतनृपैरवरुद्धे नगरे भगवत्पुण्यशक्तिप्रेरितां प्राकारोपरिस्थितां भगवन्मातरमवलोक्य ते वैरिनृपाः प्रणता इति नमिः २१, तथा च बृहद् भाष्यम्-"मिहिलाए नयरीए विजयनरिंदस्स मंदिरे सोउं। विबुहनिवहेहिं विहियं सुयजंममहामहं रम्मं ॥१॥ ईसामच्छरगरुयत्तणेण आगामिपरिभवभयाओ। रुद्धा पचंतियपत्थिवेहिं तुरियं पुरी मिहिला ॥२॥ पट्ठिय(चंचल)चित्ते लोए विजयनरिंदंमि वाउलीभूए। मूढंमि मंतिवग्गे अइघोरे कोट्टरोहंमि ॥३॥ चिंतइ वप्पादेवी सुरवइमहियस्स मज्झतणयस्स। मज्झण्हदिणयरस्स व तेयं विसहंति कह रिउणो? ॥ ४ ॥ तम्हा दंसेमि इमं गोसे सव्वेसि दुट्ठराईणं। पणमंति पलायंति य सयराहं जेण सव्वेऽवि ॥५॥ मग्गाणुसारिपरिणामियाए बुद्धीए भाविउं एवं। उच्छंगभरियबाला स्सुरुदए सालमारूढा ॥६॥ दट्ठूण जिणवरिंदं रायाणो माणमच्छरविउत्ता। पणमंति विणयसारं सेवगभावं पवन्नत्ति ॥७॥ जं पणया वेरिनिवा दंसियमित्ते जिणंमि तेण नमी। इय नामं एगवीसमजिणस्स विहियं विजयरन्ना ॥८॥" अरिष्टस्य-दुरितस्य नेमिः-चक्रधारेवेत्यरिष्टनेमिः गर्भस्थेऽस्मिन् माता महानरिष्टरत्नमय उत्पतन्नेमिर्दृष्ट इत्यरिष्टनेमिः, अकारोऽत्र पश्चिमादिशब्दवत्

२२ सर्वभावान् पश्यतीति निरुक्तात्पार्श्वः, गर्भस्थेऽस्मिन् माता शयनीयस्था निशि तमसि सर्प्पमपश्यदिति पार्श्वः,उत्पत्तेरारभ्य ज्ञानादिभिरभिवर्द्धत इति वर्द्धमानः, गर्भस्थेऽस्मिन् ज्ञातकुलं धनधान्यादिभिर्वृद्धिं गतमिति वर्द्धमानः२४,एवं कीर्त्तयित्वा चित्त- शुद्धये प्रणिधानमाह-'एव'मित्यादि,एवं-पूर्व्वोक्तप्रकारेण मयाऽभिष्टुता-आभिमुख्यतः स्तुताः सादरमितिभावः, किंविशिष्टाः ?- विधूतरजोमलाः, बध्यमानं बद्धं ऐर्यापथं वा कर्म रजः, पूर्वबद्धं निकाचितं सांपरायिकं वा मलं,ते विधूते-अपनीते यैस्ते विधूत- रजोमलाः, अत एव प्रक्षीणजरामरणाः,कारणभावात्, चतुर्विंशतिरपि जिनवराः, अपिशब्दः प्राग्वत्, जिनवराः-श्रुतादिजिनेभ्यः वराः-प्रकृष्टास्तीर्थंकरा मे-मम प्रसीदंतु-प्रसादपरा भवंतु। यद्यप्येते वीतरागादित्वान्न प्रसीदंति तथापि तानचिंत्यमाहात्म्योपेतान् चिंतामण्यादीनिव मनःशुद्ध्याऽऽराधयन्नभीष्टफलमवाप्नोति, तथा 'कित्तिये'त्यादि, कीर्त्तिताः-स्वनामभिः प्रोक्ताः वंदिता— वाग्मनोभिः स्तुताः महिताः-पुष्पादिभिः पूजिता, मइयत्ति वा पाठः, अत्र मयका-मया, क एते इत्याह-य इति प्रत्यक्षा एते ऋषभाद्या लोकस्य-प्राणिवर्गस्य कर्ममलाभावेनोत्तमाः—प्रकृष्टा उच्छिन्नतमसो वा सिद्धाः-निष्ठितार्थाः अरोगस्य भाव आरोग्यं- सिद्धत्वं तस्मै बोधिलाभः-अर्हद्धर्मावाप्तिः आरोग्यबोधिलाभस्तं, स चानिदानो मोक्षायेत्यतस्तदर्थमाह-'समाधिवरं, समाधिः- परमस्वास्थ्यरूपं भावसमाधिमित्यर्थः, सोऽप्यनेकधा तारतम्येनात उत्तमं-सर्व्वोत्कृष्टं ददतु, भावसमाधिगुणाविर्भावकं जिनद- त्ताख्यानकं, तथाहि—

छद्मस्थ एकदा वीरो, वैशाल्यामाययौ बहिः। तस्थौ प्रतिमया देवकुले काले घनागमे ॥ १ ॥ तत्रासीत् परमश्राद्धो, जिन- दत्ताभिधः सुधीः। च्युतः श्रेष्ठिपदाज्जीर्णश्रेष्ठित्वेन स विश्रुतः ॥२॥ वीरं संवीक्ष्य वंदित्वा, कृत्वोपास्तिं चिराद् गृहम्। आगा-

दहिंडनेनास्य, तर्कयन्नुपवासिताम् ॥ ३ ॥ एवं प्रतिदिनं कुर्वन्, वर्षारात्रमतीत्य सः। दध्यौ स्वाम्यद्य मद्गेहे यद्यागच्छेत् परेण किम्? ॥४॥ ध्यायन्निति गृहस्यांतस्तस्थौ स्वस्थमनाश्चिरम्। मध्य े तु गृहद्वारे, सोऽथ स्थित्वेत्यचिंतयत् ॥ ५ ॥ यद्यत्रैष्यति वीरोऽद्य, कल्पद्रुरिव जंगमः। संमुखस्तस्य यास्यामि, मूर्धबद्धांजलिस्तदा ॥६॥ तं त्रिः प्रदक्षिणीकृत्य,वंदिष्ये सपरिच्छदः। ततो नेष्ये गृहस्यान्तर्निधानमिव जंगमम् ॥७॥ अथान्नपानैर्मनोज्ञैः,प्रासुकैरेषणीयकैः। भक्त्या तं पारयिष्यामि,संसारांभोधितारकम् ॥८॥ पुनर्नत्वाऽनुयास्यामि, पदानि कतिचित्ततः। धन्यंमन्यः स्वयं भोक्ष्ये, शेषमुद्धरितं मुदा ॥ ९ ॥ एवं मनोरथश्रेणीं, जिनदत्तस्य कुर्वतः। श्रीवीरोऽभिनवश्रेष्ठिगृहे भिक्षार्थमागमत् ॥१०॥ कुल्मापा दापितास्तेन, चेट्या चट्टुकहस्तया। सुपात्रदानतस्तत्र, पंच दिव्यानि जज्ञिरे ॥ ११ ॥ नृपाद्या मिलितास्तत्र, श्रेष्ठ्यसौ तैः प्रशंसितः। पारयित्वा ततोऽन्यत्र, विहर्तुं प्रभुरप्यगात् ॥ १२ ॥ जिनदत्तो निशम्याथ, ध्वनंतं दिवि दुन्दुभिम्। दध्यौ धिग् मामधन्योऽहं, यन्नायान्मद्गृहं प्रभुः ॥ १३ ॥ तत्पुर्यामथ तत्राह्नि, केवली समवासरत्। नृपाद्या एत्य तं नत्वाऽपृच्छत् कः पुण्यवानिह? ॥ १४ ॥ सोऽप्याख्यज्जिनदत्तं तं, राज्ञोचेऽनेन नो जिनः। पारितः पारितः किंतु, श्रेष्ठिनाऽभिनवेन सः ॥१५॥ केवली कथयित्वाऽस्य, भावनां मूलतोऽपि हि। नभागे भावतोऽनेन,पारितः परमेश्वरः ॥१६॥ दधानेन समाधिं तं, प्रधानं धीमता तदा। द्वादशस्वर्गसंसर्गयोग्यं कर्म समर्जितम् ॥१७॥ किं चान्यद्यदि नाश्रोष्यत्तदाऽसौ देवदुंदुभिम्। ततस्तदैव संप्राप्स्यत्, केवलज्ञानमुज्ज्वलम् ॥१८॥ अनेन भावशून्येन, नूतनश्रेष्ठिना पुनः। सुपात्रदानतः प्राप्तं, स्वर्णवृष्ट्यादिकं फलम् ॥१९॥ समाधिरहितो जीवः, स्याल्लभेतैहिकं फलम्। समाधिना पुनर्युक्तः, स्वर्गमोक्षावपि क्षणात् ॥२०॥ जिनदत्तं प्रशस्याथ,ते सर्वेऽगुर्यथागतम्। जिनास्तदेवं विज्ञेया, नूनं भावसमाविदाः ॥२१॥ तथा 'चंदेसु' इत्यादि,

आदित्येभ्योऽधिकं प्रकाशकराः, केवलोद्योतेन पंचम्यर्थे सप्तमी, यत् चंद्रेभ्यो निर्म्मलतराः कर्म्ममलकलंकापगमात्, लोकालोकप्रकाशकत्वात्, यदागमः—"चंदाइच्चगहाणं पभा पयासेइ परिमियं खेत्तं। केवलियनाणलंभो लोयालोयं पयासेइ॥१॥" त्ति, सागरवरः—स्वयंभूरमणांभोधिस्तद्वद् गंभीराः परीषहाद्यक्षोभ्यत्वात्, सिद्धाः—क्षीणाशेषकर्म्माणः सिद्धिं—परमपदावाप्तिं मम दिशंतु—प्रयच्छन्तु। एष चतुर्विंशतिजिनस्तवाख्यश्चतुर्थोऽधिकारः। इह मौलं चैत्यं समाधिकारणमिति मूलप्रतिमायाः प्राक् स्तुतिरुक्ता, सांप्रतं सर्व्वेऽप्यर्हंतस्तुल्यगुणा इति सर्वलोके अर्हच्चैत्यानां वंदनाद्यर्थं कायोत्सर्गकरणायेदं पठति—'सव्वलोए अरिहंतचेइयाणमित्यादि, यावद् वोसिरामि' अर्थः प्राग्वत्, नवरं सर्वलोके ऊर्ध्वाधस्तिर्यग्रूपे त्रैलोक्य इत्यर्थः तत्र ऊर्ध्वलोके सौधर्म्मादिस्वर्गगतविमानेषु यथा—बत्तीसलक्ख चेइय सोहम्मे अट्ठवीस ईसाणे। बारस सनक्कुमारे माहिंदे अट्ठ चउ बंभे ॥१॥ पंचाससहस लन्तगि सुके चालीस छच्च सहसारे। आणयपाणय चउसय तिन्नि सया आरणच्चुयए ॥ २ ॥ हिट्ठिमतिगे इगारुत्तरं सयं मज्झिमंमि सत्तहियं। गेविज्जुपरि तिगि सयं पणऽणुत्तरचेइए वंदे ॥३॥ चुलसी लक्खा सगनवइ सहस तेवीस उवरिलोयंमि। चेइयपडिमा वंदे चउ पडिहारट्ठसउ मज्झे ॥ ४ ॥ कप्पेसु बावनसयं कोडी चउणवइ लक्खछसहस्सा। गेविज्ज पडिमसहसा अडतीसं सत्तसयसट्ठा ॥५॥ अधोलोके चमरादिभवनेषु, तच्च—चउतीस तीस असुरे नागे चउचत्त चत्त चिइलक्खा। वाऊसुपंन छायाल कणगे अडतीस चउतीसा ।६॥ दीवोदहिविज्जुदिसाथणियग्गिसु विहु चत्त छत्तीसा। वंदे अह जम्मुत्तर चेइ विसयरिलक्ख सगकोडी ॥ ७ ॥ कोडी सगसत्तकोडी तीस असी लक्ख पडिम अहलोए। जम्मुत्तरि कोडिसयं छक्कोडि अडलक्ख असीई य ॥ ८ ॥ तिर्यग्लोके द्वीपाचलव्यंतरनगरज्योतिष्कविमानादिषु, तथाहि—मेरुंमि सतर अडदिग्गएसु चउदस नईसु कुरुसु

दुगं। तरुसु दुसय चउतीसा वक्खारदहेसु सोल पुढो ॥९॥ दो सय कणयगिरीसुं कुंडेसु छहत्तरी छ कुलगिरी । अडतीसं वेयड्ढे चउरगयदंतजमगेसु ॥१०॥ तिरिलोइ जंबूदीवे नमामि इह चेइए छपणतीसे। धायइ १२७० पुक्ख रि १२७० दुगुणा चउ रइइसुयारमणुसनगे ॥११॥ नरखित्त बहिं बाणवइ चेइए रायहाणिसु दुती । चउरो कुंडलरुयगे नमामि बावन्न नंदिसरे ॥१२॥ तिरिय लक्ख सहस छासी नव सयहीणा नमामि जिणपडिमा। नरखित्ते बाहिं पुण इगारसहसा दुसय असिया ॥१३॥ वंतर सासयचेइय असंखता जोइसेसु संखगुणा। वंदे अ सयाओवि भरहाइकया व दुविहाओ ॥ १४ ॥ स्तुतिश्चात्र सर्वतीर्थकरसाधारणा, एष त्रैलोक्यस्थापनार्हत्स्तवरूपः पंचमोऽधिकारस्तृतीयो दंडकः। अथ येन तेऽर्हंतस्तदुक्ताश्च भावा ज्ञायंते तत्प्रदीपकल्पं सम्यक्श्रुतमर्हति कीर्त्तनं, तत्रापि पितृभूततया तत्प्रणेतॄन् प्रथमं स्तौति—'पुक्खरवरदीवड्ढे'इत्यादि, पुष्करवरद्वीपस्तृतीयस्त द्धे मानुषोत्तरपर्वतादर्वाग्भागवर्त्तिनि, तथा धातकीखंडे द्वितीयद्वीपे जंबूद्वीपे प्रथमे, महत्तरक्षेत्रप्राधान्याश्रयणात् पश्चानुपूर्व्या निर्देशः, त्रीणि भरतैरावतमहाविदेहानि पंचदश क्षेत्राणि तेषु,प्राकृतत्वादेकवचनं,धर्म्मस्य- तधर्म्मस्यादिकरान्—सूत्रतः प्रथमकरणशीलान् नमस्यामि—स्तौमि। एतेन च सर्वत्राभीष्टवस्तुनि प्रवर्त्त नैः शिष्टैरभीष्टदेवतास्तुतिपूर्वकमेव प्रवर्त्तितव्यमित्यावेदितं भवति,एष षष्ठोऽधिकारः। एवं दर्शनविशुद्धिं कृत्वा ज्ञ वि द्ध्यर्थं श्रुतधर्म्मं स्तौति—'तमितिमिरे' ।दि,तमः—अज्ञानं तदेव तिमिरं तयोर्वा पटलं—वृंदं तद् विध्वंसयति—विनाशयतीति तमस्तिमिरपटलविध्वंसनस्तस्य, अज्ञाननिरासेनैवास्य प्रवृत्तेः, 'सुरगणनरेंद्रमहितस्ये'ति अ ममहिमां कुर्वन्त्येव सुरादयः सीमां—मर्यादां धारयतीति सीमाधरः, मात् श्रुतधर्म्मस्तस्य, धारयंत्यागमवंतो मर्यादाम्, कर्म्मण्यत्र षष्ठी, अतस्तं वंदे, तस्य वा यन् हात्म्यं तद् वंदे इति संबंधे षष्ठी,अथवा तस्य वंदे—वंदनं करोमीति। प्रकर्षेण स्फोटितं—

विदारितं मोहजालं-मिथ्यात्वादिरूपं येन स तथा, श्रुतधर्म्मे हि सति विवेकिनां मोहजालं विलयमुपयात्येव, इत्थं श्रुतमभिवंद्य तस्यैव गुणोपदर्शनद्वारेणाप्रमादगोचरतां प्रतिपादयन्नाह—'जाईजरामरणे'त्यादि, कः सचेतनो धर्म्मस्य-श्रुतधर्म्मस्य सारं-सामर्थ्यमुपलभ्य-विज्ञाय श्रुतधर्म्मोदितेऽनुष्ठाने प्रमादं-अनादरं कुर्यात् ?,न कश्चिदित्यर्थः,जातिः-जन्म जरा-वयोहानिः मरणं-प्राणनाशः शोको-मानसो दुःखविशेषस्तान् प्रणाशयति-अपनयति जातिजरामरणशोकप्रणाशनस्तस्य, श्रुतधर्म्मो ानुष्ठानाद्धि जात्यादयः प्रणश्यंत्येव, अनेनास्यानर्थप्रतिघातित्वमुक्तं, कल्यं-आरोग्यं अणति-शब्दयति इति कल्याणं, पुष्कलं-संपूर्णं, न च तदल्पं, किन्तु विशालं-विस्तीर्णं, एवंभूतं सुखमावहति-प्रापयतीति कल्याणपुष्कलविशालसुखावहस्तस्य, श्रुतधर्म्मोक्तानुष्ठानादुक्तलक्षणमपवर्गसुखमवाप्यत एव, अनेन चास्य विशिष्टार्थप्रापकत्वमाह, 'देवदानवनरेंद्रगणार्चितस्ये'त्येतत् सुरगणनरेंद्रमहितस्यैवानुवृत्तिफलसमर्थनं व्यक्तं च।

अत्र संप्रदायः-प्रमाद्यन् सूरिरेकोऽत्र,प्रेत्याभूद् विगतश्रुतः। तत्रोद्यच्छन् स एवाभूत्, रद तांबुधेः॥१॥ तथाहि-एकस्मिन् भ्रातरौ गच्छे, गंगाकूलनिवासिनौ। व्रतं जगृहतुः शांतौ, तत्रैकोऽभूद् बहुश्रुतः ॥२॥ सूरिर्जज्ञे क्रमेणासौ, शिष्यैः सूत्रार्थमिच्छुभिः। सेव्यमानो दिनं सर्वं, विश्रामं नाश्नुते क्वचित् ॥३॥ निशायामपि सूत्रार्थं, चिंतनपृच्छनादिभिः। नाससाद सुखान्निद्रामन्वहं व्यग्रमानसः ॥ ४ ॥ भ्राता तस्य द्वितीयस्तु, नित्यमास्ते यथासुखम्। तं च पश्यन्नसौ सूरिर्दध्यौ दुर्बुद्धिबाधितः ॥५॥ अहो मे बांधवो धन्यो, योऽयमास्ते सदा सुखी। ज्ञानविज्ञानहीनत्वात्, केनाप्यायास्यते नहि ॥६॥ अजाकृपाणकल्पेन, ज्ञानेनाहं त्ववाप्नुयाम्। दुःखं ततोऽत्र केनापि, विदुषा सूदितं ह्यदः ॥७॥ मूर्खत्वं हि सखे! ममापि रुचितं तस्यापि चाष्टौ गुणा, निश्चिंतो?

बहुभोजनोऽत्रपमना३ नक्तंदिवाशायकः४। कार्याकार्यविचारणांधवधिरो५ मानापमाने समः६ प्रायेणामयवर्जितो७ दृढवपु८र्मूर्खः सुखं जीवति ॥८॥ न पुनर्भावयति यथा—नानाशास्त्रसुभाषितामृतरसैः श्रोत्रोत्सवं कुर्वतां, येषां यांति दिनानि पंडितजनव्यायामखिन्नात्मनाम्। तेषां जन्म च जीवितं च सफलं तैरेव भूर्भूषिता, शेषैः किं पशुवद् विवेकरहितैर्भूभारभूतैर्नरैः?॥९॥ ज्ञानमद्वेषतश्चैवं, ज्ञानमाशातयन्नसौ। दुष्टबुद्धिः प्रमादेन, ज्ञानघ्नं कर्म्म बद्धवान् ॥१०॥ ज्ञानाचारातिचारं तमनालोच्य विपद्य च। देवोऽभूद् देवलोकेऽसौ, सच्चारित्रप्रभावतः ॥११॥ च्युत्वाऽऽभीरकुले कस्मिन्, भरतेऽत्र सुतोऽजनि। पितृभ्यामात्मरूपां स, कन्यामुद्वाहितो युवा ॥१२॥ तस्यैकदा सुता जज्ञे, सुरूपा भद्रकन्यका। यौवनं प्राप सा यूनां, मनोनयनहारकम् ॥ १३ ॥ अनोधुरि निधायैनां, तत्पिता नगरं प्रति। प्रतस्थे सममाभीरैर्घृतं विक्रेतुमन्यदा ॥१४॥ तामेव पश्यतां तेषामनांसि च मनांसि च। उत्पथस्थान्यभज्यंत, सद्यः प्रस्खल्य कुत्रचित् ॥१५॥ विलक्षीभूय संभूय, तैरित्यौच्यत तावता। नाम्नाऽशकटाऽशकटापितेति च मुहुर्मुहुः ॥ १६ ॥ शृण्वतस्तस्य वैराग्यं, बभूव लघुकर्म्मणः। सुतामुद्वाह्य केनापि, दत्त्वा तस्मै धनादिकम् ॥१७॥ गच्छे कस्मिन् स निष्क्रम्य, योगोद्वहनमाददः। कुर्वन्नध्यैष्ट सुस्पष्टमुत्तराध्ययनत्रयम् ॥१८॥ पठतोऽसंस्कृताख्यं च, तुर्याध्ययनमंजसा। तद् ज्ञानावरणीयाख्यमागात्कर्मोदयं ततः ॥ १९ ॥ अधीयानस्य तत्तस्याचामाम्लाभ्यां दिनद्वयम्। नैकोऽप्यालापकोऽस्यागात्कृच्छ्रेणाप्यभियोगतः ॥ २० ॥ ततोऽसौ गुरुभिः प्रोचे, किं तेऽनुज्ञाप्यतामिदम्?। स प्राह भगवन्नस्य, योगः कीदृग्? ततो गुरुः ॥२१॥ ऊचे यावदिदं नैति, तावदाचाम्लमस्य तु। स साह कृतमन्येन, श्रुतेन तपसा न मे ॥२२॥ आचाम्लान्यथ सोऽकार्षीद्, द्वादशाब्दीं समाहितः। क्षयमापेतकत् कर्म, सुखेनाध्यैष्ट तच्छ्रुतम् ॥२३॥ शेषं चापि श्रुतं क्षिप्रमधीते स महामतिः। श्रुतभक्तेरिहामुत्र, सर्वत्र सुखभागभूत् ॥२४॥

यतः सकर्णस्य चारित्रधर्म्मे प्रमादः कर्तुं न युज्यते ततः किमित्याह–'सिद्धे भो पयओ' इत्यादि, सिद्धे–फलाऽव्यभिचारेण परिनिष्ठिते, नह्यतो विधिप्रवृत्तः फलेन वंच्यते इति भावः१, सर्वनयव्यापकत्वेन च प्रतिष्ठिते२ विधिप्रतिषेधा१नुष्ठाना२मिधेया३ विरोधलक्षणकष१च्छेद२ तापाख्य३त्रिकोटिपरिशुद्धत्वेन च प्रख्याते३, भो इत्यतिशयिनामामंत्रणे, पश्यंतु भवंतः प्रयतोऽहं, लोकव्यवहारवत् धर्म्मोऽपि ससाक्षिकः सम्यक् स्यादिति ज्ञापनार्थं 'भो' इत्युक्तं, नमः अस्त्वतिशेषः, यथाशक्ति प्रकर्षेण यतोऽहं, लोकव्यवहारवत् धर्म्मोऽपि ससाक्षिकः सम्यक् स्यादिति ज्ञापनार्थं 'भो' इत्युक्तं, नमः अस्त्वतिशेषः, यदार्षं–"पढमं जिनमते–चतुर्थ्यर्थेऽत्र सप्तमी, यस्मिन् मते किं ?–नंदिः–समृद्धिः सदा संयमे–चारित्रे, भवति इत्युपस्कारः, यदार्षं–"पढमं नाणं तओ दया" इत्यादि, किंविशिष्टे संयमे ?—"देवंनागसुवन्नकिन्नरगणस॰भूअभावच्चिए इति, देवतानागसुवर्णकिन्नरगणैः सद्भूतभावेन अर्चिते, संयमवंतो ह्यर्च्यन्ते एव देवाद्यैः, तत्र देवा वैमानिका नागा–धरणादयः शोभनवर्णाः सुवर्णाः–ज्योतिष्काः किंनरा–व्यंतरविशेषास्तेषां समूहैः, अत्र वकारेऽनुस्वारः प्राकृतत्वात् सकारस्य द्वित्वं च, किंभूते जिनमते ?–लोको ज्ञानं यत्र प्रवचने प्रतिष्ठितः–तद्वशीभूतः तथा जगदिदं ज्ञेयतया प्रतिष्ठितमिति योगः, केचिन्मर्त्यलोकमेव जगन्मन्यंत इत्याह–'त्रैलोक्यमर्त्यासुरं' आधाराधेयरूपं, तत्र त्रैलोक्यं–ऊर्ध्वाधस्तिर्यग्लोकलक्षणं तस्मिन्, मर्त्यासुरमित्युपलक्षणत्वान्नारकतिर्यगादिपरिग्रहः, अथ इत्थंभूतो धर्मः–श्रुतधर्म्मो वर्द्धतां–वृद्धिं यातु, शाश्वतोऽर्थतो नित्यः विजयतः–परवादिविजयेन धर्म्मोत्तरं–चारित्रधर्मस्य प्राधान्यं यथा भवति एवं वर्द्धतां, पुनर्वृद्ध्यभिधानं प्रत्यहं मोक्षार्थिना ज्ञानवृद्धिर्विधेयेत्युपदेशार्थं । प्रणिधानमिदं मोक्षबीजकल्पं परमार्थतोऽनाशंसारूपमेवेति, भवति चेत्थं विवेकजलसिक्त प्रार्थनारोपणाभ्यासेन शालिवृद्धिवत् श्रुतधर्म्मवृद्धिः, एवं प्रणिधानं कृत्वा तत्पूर्विका क्रिया फलायेति श्रुतस्य वंदनाद्यर्थं कायोत्सर्गाय पठति–'सुयस्स भगवओ इत्यादि, वोसिरामी'त्ति

असरिसअमरिसवसमिसिमिसंतजोहजुओ । समणे निव्वासेउं उवट्ठिओ तलवरो जाव ॥११२॥ विहिविहियभावसब्भावसारदुक्कर-तवाणुभावेण । ताव समुप्पन्नअगण्णलद्धिबहुसिद्धिकलिएण ॥११३॥ चुन्निज्ज चक्कवट्टिं उप्पन्ने सिंगनादकज्जंमि । जइ तं न करेइ मुणी भवे तयाऽणंतसंसारी ॥११४॥ इय सुयमणुसरमाणेण माणअवमाणतुल्लमणसाऽवि । कुमयगहराहुणा बाहुसाहुणा थंभिआ ते उ ॥११५॥ तं सोउं भयभीओ संतेउरपरियणो निवो तुरियं । गंतूण तत्थ गुरुणो मुणिणो खामेइ पुणरुत्तं ॥११६॥ भणिओ निवो गुरूहिं तं धन्नो जस्स तुज्झ देसंमि । मुणिणो निप्पच्चूहं कुणंति परलोयहियमेवं ॥११७॥ मा संकेज्ज नरवर ! जइजणकिंचेण जायए असिवं । पुव्वकयअसुहमेवं अवरज्झइ सयललोयस्स ॥११८॥ एवंति भणिय राया राहुमुणिं खामए विसेसेण । उत्तंभिओ तओ तेण तलवरो सपरिवारोऽवि ॥११९॥ तं दट्ठु मुणिपभावं तप्पयसंफुसियरेणुनियरेण । तच्छायाऽविय कुमरो रण्णा सव्वंग-मालुट्ठो ॥१२०॥ पीऊसपोससित्तुव निव्वसुओ विसवियारपरिमुक्को । सुत्थो खणेण जाओ राया पुण सावए वरो ॥१२१॥ इत्थं-तरंमि अणसणपवन्नसाहू महिड्ढियजणेण । कीरंतमहामहिमो मरिउं पत्तो तइयकप्पे ॥ १२२ ॥ विहिया परमा जिणपवयणउन्नई रायपमुहलोएण । तो सूरदेवसिट्ठी नमिय गुरुं विन्नवइ एवं ॥ १२३ ॥ मुणिनाह ! किहणु बाहूसाहुणो बहुविहाउ लद्धीओ । एवं विहाउ सुतवे समेऽवि न उणो सुबाहुस्स ? ॥१२४॥ आह गुरू एए खलु लद्धिविसेसा हवंति तवेण । विहिभावणापरेणं न कयावि जहातहकएण ॥ १२५ ॥ विहिभावविगलयाए कट्ठाणुट्ठाणकारिणोऽवि भिसं । सिट्ठि ! इमा लद्धीओ सुबाहुमुणिणो कह हवंतु ? ॥१२६॥ इय मुणिय सूरदेवो संवेगगओ गहेइ पव्वज्जं । वसुमित्तगुरुसमीवे विहिभावपरो य कुणइ तवं ॥१२७॥ कमसो अहिज्जि-यसुओ विहरंतो संपयं इहं पत्तो । उप्पन्नविमलनाणो धम्मं साहेइ सो उ अहं ॥१२८॥ इममायन्निय जणयं पुच्छेउं केवलिस्स पासंमि ।

गिण्हेइ बंभदत्तो दिक्खं सुविसुद्धपरिणामो ॥ १२९ ॥ भावणपहाणविहिपुव्वधम्मअहिगारसारतवनिरओ । केवलकलाइ कलिओ सिवं गओ बंभदत्तमुणी ॥१३०॥ इत्येवमाकर्ण्य सकर्णलोकाश्चित्रं चरित्रं जिनदत्तसूनोः। सदाऽधिकारस्मर दिशुद्धे. यत्नं रुध्वं जिनवंदनेऽस्मिन् ॥ १३१ ॥ इति ब्र द कथा, इत्युक्तं 'वार अहिगार'त्ति द्वादशं द्वारं, संप्रति 'चउवंदणिज्ज'त्ति त्रयोदशं द्वारं समधिकपूर्वार्द्धपदेनाह—

## चउ वंदणिज्ज जिणमुणिसुयसिद्धा इह

चत्वारो वंदनीयाः सुमतिकन्यकयेव मंगलोत्तमशरणविधायित्वेन स्तुतिप्रणामाद्यर्हाः, के ते इत्याह—जिनाश्चतुर्विधा वक्ष्यमाणस्वरूपाः१, मुनयश्च—साधवो गच्छगतादिभेदभिन्नाः, आचार्योपाध्याययोस्तु साधुत्वाव्यभिचारात् साधुग्रहणात् ग्रहः, उक्तं च—"साहुत्तसुट्ठिया जं आयरियाई तओ य ते साहू । साहुगहणेण गहिय"त्ति २, श्रुतं च—अंगानंगप्रविष्टं ३ सिद्धाश्च—क्षीणाशेषकर्म्माणः४, इहेति संपूर्णचै वंदनायां जिनशासने वा, यद्वा त्रैलोक्येऽपीति,सुमतिकन्याकथा चैवं—अत्थिह पुव्वविदेहे सीयानइदाहिणेण वरविजए । रमणिज्जे वरनयरी सुभगा सुभगाभिमणलोया ॥ १ ॥ सरभसनमंतसोलसनिवसहसकिरीडघिट्ठपयवीढा । पालंति तमपराइयअनंतवीरियत्ति बलविण्हू ॥ २ ॥ पावकरणाउ विरया निरया निच्चंपि धम्मकरणम्मि । विरयत्ति अग्गमहिसी आसी अवराइयबलस्स ॥ ३ ॥ तीसे धूया सुमई बालत्ताओवि धम्मकरणमई । दुच्चरतवचरणरई चिरण्णलावन्नविजियसई ॥ ४ ॥ अहिगयजियाइतत्ता जिणमुणिसुयसिद्धवंदणपसत्ता । जिणधम्मरागरत्ता निरुवमरूवेण संजुत्ता ॥ ५ ॥ पालियवरजीवदया सिसुभावेविहु गहियगिहिसुवया। आवस्सयाइनिरया भावइ सुहभावणाओ सया ॥६॥ उववासपारणे गंतु चेइए सा कयावि जिणनाहं ।

पूइय पडिपुन्नविहिए वंदिउं काउ पणिहाणं ॥ ७ ॥ आगम्म नियावासंमि पारणट्ठा इमा समुवविट्ठा । चिंतइ पसन्नचित्ता एवं दारं पलोयंती ॥ ८ ॥ जइ इत्थ मज्झ गुरुपुन्नपेरिओ कोवि एइ सुमहप्पा । अन्नं धम्ममन्ना ता एयं दाउ पारेमि ॥ ९ ॥ इत्तो य गयममत्तो दुच्चरतवचरणकरणआसत्तो । मलमइलवत्थगत्तो सयवत्तपवित्तचारित्तो ॥ १० ॥ इरिआए आउत्तो चंदुज्जलसीलपालणुज्जुत्तो । तस्स दुवारे पत्तो साहू नामेण वरदत्तो ॥११॥ तं दट्ठु अहो मह पुन्नपगरिसो एरिसो मुणी जेण । इह इण्हि आगओ रयणवुट्ठिसरिसो दरिद्दगिहे ॥१२॥ इय मन्नंती उट्ठिय ससंभमं गहिय थालमणुगिण्ह । भयवं ! ममंति भणिरी तं पडिलाभइ पवरसद्धा ॥१३॥ तो चित्तवित्तपत्ताण जोगओ तत्थ पंच दिव्वाणि । पाउब्भूयाइं इओ गओ सठाणं तु स महप्पा ॥१४॥ दट्ठूण रयणवुट्ठिं समागया रामकेसवा तत्थ । चिंतंति विम्हियमणा धन्नसपुन्ना इमा कन्ना ॥१५॥ जम्माउवि अकलंका दुरुज्झियसयलपावमलपंका । संमत्ते निस्संका सुहनिज्जियपुंनिममयंका ॥१६॥ देमो सयंवरं ता इमीइ इय चिंतिउं समाहूया । त्रिजयद्धनिवासिनिवा समागया झत्ति तेऽवि तहिं ॥१७॥ थंभसयसंनिविट्ठो लीलट्ठियसालभंजियवरिट्ठो । अमरमणाणवि रइओ सयंवरामंडवो रइओ ॥१८॥ तो कणयकलसण्हाया वरहरिचंदणविलित्तसव्वंगा । वरवत्थाभरणधरा सिरउवरिं धरियसियछत्ता ॥ १९ ॥ वीइज्जंती सियचामराहिं करकलियविमलवरमाला । पडिहारदंसियपहा पत्ता सुमईवि तम्मज्झे ॥ २० ॥ इतश्च—वेरुलियगरुयवंसं चामीयरचारुवेइयालंभं । धुव्वंतधयपडागं उज्जोविंतं दसदिसागं ॥ २१ ॥ नयणसयपिच्छणिज्जं आगच्छंतं नहंमि रमणिज्जं । पिच्छंति वरविमाणं ते रायाणो अइपमाणं ॥ २२ ॥ तंमज्झे वरमणिरयणजडियसीहासणंमि उवविट्ठं । एगं देवं नियकंतिपंतिउज्जोइयदियंतं ॥२३॥ अह सा सुमई ते रामकेसवा भूमिवासवा ते उ । विम्हइयमणा उद्धुकयवयणा जाव पिच्छंति ॥२४॥ किणिकिणिर-

किंकिणीजालमालमागय विमाणमह तत्थ। तो देवी ओयरिया किंनरगिज्जंतविमलगुणा ॥२५॥ ठाउ सयंवरमंडवमज्झे सीहासणे तओ देवी। उक्खिविय कमलदलकोमलं करं दाहिणं भणइ ॥ २६ ॥ हे धणसिरि मुद्धे बुज्झ बुज्झ मा मुज्झ मज्झ निसुणाहि। एगग्गमणा धणियं खणमेग हियंकरं वयणं ॥ २७ ॥ किंतु कहिस्सइ एसा उ भयवती इय निवावि ते जाया। सकलकलाविहु असकलकला तहिं सावहाणमणा ॥२८॥ अह सा देवी जंपइ पुक्खरदीवड्ढपुव्वभरहंमि। नंदणवणमत्थि पुरं बहुप्पियं नंदणवणं व ॥२९॥ तत्थ पभूयसुरयणो अत्थि महिंदो निवो महिंदुव्व। तस्स पिया णंतमई न तम्मई सीलभरवहणे ॥३०॥ अंकगयसुरहिवरकुसुमदामदुगसुमणसूइया धूया। जाया तीइऽभिरामा कणयसिरी धणसिरी नाम ॥३१॥ अन्नुन्नसिणेहाओ गयाउ ताओ कयावि कीलेउं। सिरिपव्वयवरसेलं फुरंतकरुणं मुणिमणं व ॥३२॥ तत्थ सुहज्झाणठियं नियंति नंदणगिरंति अणगारं। माणससरं व सच्छासयं सया संवरसमेयं ॥३३॥ तं दट्ठु तुट्ठहियया हियावहं तिहुयणस्सवि मुणिंदं। वंदंति ताउ भत्तीइ इय धम्मं कहइ साहूवि ॥३४॥ "दुलहं लहिय नरभवं भविया! भवियत्तयानिओगेण। चिइवंदणाइधम्मं करेह जइ महह सिवसंमं ॥३५॥ यतः–पूया जिणिंदेसु रई वएसु, जत्तो य सामाइयपोसहेसु। दाणं सुपत्ते सवणं सुतित्थे, साहुसेवा सिवलोयमग्गो ॥३६॥" तो ताओ पडिवज्जिय संमं संमत्तमूलगिहिधम्मं। नमिय मुणिं गंतु गिहं कुणंति इय धम्ममपमत्ता ॥३७॥ पूयंति जिणे सेवंति मुणिगणे तह पढंति सिद्धंतं। पालंति वए सिद्धे नमंति चिंतंति तत्ताइं ॥३८॥ कीलंतीउ कयाविहु असोगवणियाइ त रागवसा। तिपुराहिववीरंगयखेयरपावेण अवहरिया ॥३९॥ अह सपियसामलाए भणिओ ता कहवि मुयइ स नहत्थो। वंसकुडंगीउवरिं भूयोऽवि वरुणनइतीरे ॥४०॥ पडिहारेणं पहयाउ ताउ दुन्निवि य अप्पणो तत्तो। मरणंतमावयं जाणिऊण चिंतंति इय चित्ते ॥४१॥ रे जीव!

कयं तुमए जं पुव्विं तं उवागयं इण्हिं। परितावेण न छुट्टसि सुहपरिणामेण सह सव्वं ॥४२॥ जइ पुव्वविहियदुक्कयवसेण तुह आगयं
इमं दुक्खं। ता रे जिय! मा कुप्पसु परेसु वीरंगयाईसु ॥४३॥ तं पत्थियंपि जत्तेण होइ नहु इह न जं कयं पुव्विं। तो दुहसुहाण
नूणं निमित्तमित्तं परो होइ ॥ ४४ ॥ जं न कओ पुव्वभवे धंमो रे जीव! सुंदरो विउलो। तेण तुहं इह दुक्खं संजायं दारुणं दुसहं
॥४५॥ संविग्गभावियाओ इय ताओ अणसणं विहेऊण। जिणसिद्धसाहुधम्मे चउरो सरणं पवज्जंति ॥४६॥ नवकारसुमरणपरा कण-
गसिरी मरिउ तत्थ उववन्ना। इंदस्स अग्गमहिसी नवमिया नाम सा य अहं ॥४७॥ वेसमणअग्गमहिसी धणसिरी नाम तं पुणुप्पन्ना।
तो चविय तुमं जाया बलदेवसुया सुमइ भद्दे! ॥४८॥ इय आसी णे तइया संकेओ जा इओ चवइ पढमा। इयरीहिं बोहियव्वा
सा भवसयदुलहजिणधम्मे ॥४९॥ ता तुह पडिबोहकए इहागया भइणि! तुज्झ मा मुज्झ। इह विसयसुहलवेणं सरेसु पुव्वकय-
सुकयाइं ॥५०॥ तथाहि–जिणजंमणमहिमाओ जा विहियाउ सुमेरुसिहरंमि। जं नंदीसरदीवे सासय इयराओ जत्ताओ ॥ ५१ ॥
तथा चागमः–दो सासयजत्ताओ तत्थेगा होइ चित्तमासंमि। अट्ठाहियाउ महिमा बीया पुण अस्सिणे मासे ॥५२॥ तह चउमासि-
यतियगे पज्जोसवणाइ तह य इय छक्कं। जिणजम्मदिक्खकेवलनिव्वाणाइसु असासइआ ॥ ५३ ॥ जे वंदिया य दुचरतवचरणा
चारणाइवरसमणा। जं तम्मुहाउ निसुयं बीयभवे सिज्झिहिह तुज्झे ॥ ५४ ॥ जं ण्हवियपूइयाओ जयंतमुणिमाइसिद्धपडिमाओ।
जं भत्तीए नमियं दुवालसंगंपि सिद्धंतं ॥५५॥ भद्दे! धणसिरि बुज्झसु एयं सव्वंपि अहह मा मुज्झ। जंमंतरियाइ तए भो कह
विस्सारियं सव्वं? ॥५६॥ सा सद्धा तुह धम्मे ताइं तुमे जंपियाइं विविहाइं। किं वीसरियाइं तुमे जेणं मंदादरा धम्मे? ॥५७॥
जइ निच्छसि पडिउं जो संसारमहासमुद्दमज्झंमि। वरजाणवत्ततुल्लं ता पव्वज्जं पवज्जेहि ॥५८॥ इय भणिउं उप्पइया देवी आरु-

हिय नियविमाणंमि। मुच्छानिमीलियच्छी पडिया धरणीइ ता मई ॥५९॥ हा किमिणंति ससंभमचंदणसित्ता पुणागयसचित्ता। तो एवं सा सुमई तं निवनिवहं भणइ मुमई ॥६०॥ भो ! भो ! उत्तमनरवरकुलणहयलविमलपुन्निममयंका। निसुणेह नरवरिंदा ! विन्नत्तिं मज्झ एगमणा ॥ ६१ ॥ जं जंपियं इमीए महाणुभावाइ सक्कदेवीए। तं जायं पच्चक्खं सव्वं मह जाइसरणेण ॥ ६२ ॥ ता गिण्हिस्सं दिक्खं संपइ न रमइ मणं मह भवंमि। अणुजाणावेवि तुमे जमागया मह कए सव्वे ॥६३। तेऽवि भणंति नरिंदा होउ अविग्घं तुहं सुयणु धम्मे। अम्हेहिं अणुन्नाया पावेसु मणिच्छियं ठाणं ॥ ६४ ॥ तो तुट्ठा बलहरिणो सोउं तीए अणुत्तरं चरियं। दिक्खामहिमं परमं कारंति असेसनिवसहिया ॥६५॥ सक्कस्स अग्गमहिसी उ तहय वेसमणअग्गमहिसीओ। पूयं कारिंति तीसे न तारिसे को णु पूइज्जा ? ॥६६॥ कन्नासएहिं सत्तहिं समन्निया सुव्वयज्जपासंमि। निक्खंता खायजसा गिण्हइ दुविहं च सा सिक्खं ॥६७॥ इगतीसं सिद्धगुणा झायंती जिणवरे य सुमरंती। पणविहसज्झायपरा बहुमाणा सा मुणिजणंमि ॥६८॥ उज्झाणानलदहियअसेसकम्मसंताणा। पडिबोहिय भवियजणे सिद्धा सुमई अणंतगुणा ॥६९॥ इति हि सुमतिकन्यावृत्तमाकर्ण्य धन्याः!, उल्लसियसिय-श्रुतजिनमुनिसिद्धान् विश्वविश्वप्रसिद्धान्। भवजलनिधिसेतून्मोक्षहेतून् समस्तान्, प्रतिदिनमरापलं वंदितुं धत्त यत्नम् ॥७०॥ इति सुमतिकन्याकथा॥ इत्युक्तं चत्वारो वंदनीया इति त्रयोदशं द्वारं, संप्रति 'सरणिज्ज'त्ति चतुर्दशं द्वारं गाथाद्वितीयपादार्द्धेनाह— इह सुरा य सरणिज्जत्ति। इहशब्दः पूर्वद्वारे संयोजितोऽपि डमरुकमणिन्यायेनात्रापि संबध्यते, ततश्च इहेति संपूर्णचैत्यवंदनायां क्रियमाणायां सुराश्च सुर्यश्चेति 'पुरुषः स्त्रिये'त्येकशेषे सुरास्ते चात्र यक्षांबाप्रभृतयः सम्यग्दृष्टिदेवता ज्ञातव्याः, न त्वर्हंतः, तेषां प्राग्वंद-नीयत्वेनोक्तत्वाद् अनुशासकत्वात् स्मारकत्वाच, एते च किमित्याह—सरणिज्जत्ति, सरणीयास्तद्गुणानुचिंतनोत्कीर्त्तनादिनोपबृंहणीयाः,

स्तवनीया इत्यर्थः, श्लाघ्यश्च जिनप्रवचनस्थः ल्पगुणोऽपि, सम्यग्दृष्टिप्रशंसायाः कर्म्मक्षयकारणत्वात्, उक्तं च–"गुणपगरिसबहुमाणो कम्मक्खयकारणं जेणं"ति, नैवं चेत् तदोत्तरसंयमस्थानवर्त्तिभिः साधुभिर्जघन्यनरादिसंयमस्थानवर्त्तिनः साधवोऽप्यनुपबृंहणीयाः स्युः, तैश्च नियमादिषु दृढाः श्रावकाः, न चैतदागमे दृष्टमिष्टं वा यद् गुणिनां गुणा न प्रश ाः, दर्शनमालिन्याद्यवाप्तेः, आह च–"नो खलु अप्परिवडिए निच्छयओऽमइलिए व सम्मत्ते। होइ तओ परिणामो जत्तो अणुववूहणाईय॥१॥"त्ति, देशविरतानां वा अविरतानां वा अविरतसम्यग्दृष्टयः श्राद्धाः सत्काराद्यर्हा न स्युः, तथा च सति "तम्हा सव्वपयत्तेणं, जो नमुकारधारओ। सावओ सोऽवि दट्ठव्वो,जहा परमबंधवो ॥१॥" इत्याद्यपार्थकं स्यात्, एवं च सकलागमव्यवहारलोपाद्, विमर्शनीयमिदं सूक्ष्मधियेति,यद्वा सारणीयाः–सरणादिषु प्रेरणार्हाः,तत्र पम्हुट्ठे गाहा, अयमर्थः–वैयावृत्त्यादिकारका गीयंते, तत्र चानादरवतां भवतां तत् किं स्वकृत्यमपि विस्मृतं ?,न युक्तमत्र प्रमादयितुं, दुर्लभा हि पुनरियं सामग्री,दुःखदः प्रमादारिर्दुरंतो भवोदधिविनिपातः स्वनामैव सत्यापयतीत्यादिव्यंग्यार्थगर्भतद्विशेषणद्वारेण सारणादि क्रियते, अथवा सारणीयाः संघादिकृत्ये वैयावृत्त्यप्रभावनादावुभयलोकसुखावहे प्रेरणार्हास्तत्करणशक्तियुक्तत्वात्तेषां,इदमुक्तं भवति–यदाऽमुकं संघे प्रभावनादि करिष्यथ तदाऽहं कायोत्सर्गादिकं पारयिष्यामीत्यादिना सुदर्शनप्रियामनोरमाया इव तत्र २ संघकृत्ये प्रवर्त्तयितव्याः, अत्र चायं निशीथचूर्ण्युक्तो विधिः–पुव्वं अणुसिट्ठी किज्जइ, थुइत्ति भणियं होइ,अणुसिट्ठी थुइत्ति एगट्ठंति भाष्यवचनात्,साहु कयं ते एवं वुच्चइ,जहा चंपाए सुभद्दा नागरजणेण अणुसट्ठा धन्ना सपुण्णा सत्ति, तओ उवालंभो दिज्जइ,साणुणओवएसपयाणं कीरतित्ति वुत्तं भवइ२ पच्छा सो उ उवग्गहो किज्जइ ३, भणियं च–दाणे दवावणे कारणे य करणे य कयमणुन्नाए। उवहियमणुवहियं वा जाणाहि उवग्गहं एय-

॥१॥न्ति,सुदर्शनश्रेष्ठिप्रियामनोरमाकथा त्वियं–चंपायां पुरि दधिवाहनस्य नृपतेर्द्विधा दयितकीर्त्तेः। अभयाख्याऽभूद्देवी देवीव सुरूपरूपधरा ॥१॥ तत्रैव ऋषभदासः श्रेष्ठी श्रेष्ठैककर्म्मकरणचणः। अर्हद्दासी भार्या महिषीरक्षाकरः सुभगः॥२॥ सोऽन्येद्युः शिशिरर्त्तौ दिनात्यये सैरिभीः समादाय। वनतो निवृत्त उत्सर्गसंस्थमैक्षिष्ट मुनिमेकम् ॥३॥ तमगणितहिमानीपातवेदनं क्षणमुपास्य सद्म ययौ। ध्यायंस्तमेव रात्रिं निनाय निद्रादरिद्रोऽसौ ॥४॥ गत्वा प्रगे मुनिं तं यावदयं नमति पर्युपास्ते च। स नमो अरिहंताणं इत्युक्त्वा खं ययौ तावत् ॥५॥ नूनं खगामिनीयं विद्येति पपाठ मततमशठमनाः। तमपीपठदथ लष्टः श्रेष्ठी सकलं नमस्कारम् ॥६॥ वर्षासमयेऽन्येद्युर्महिषीः परतीरगा निवारयितुं। सरिदंतरदाज्झंपां गुणयन्नुच्चैर्नमस्कारम्॥७॥ चिक्कणचिक्खल्लचहुट्टकीलविद्धोदरः क्षणात् प्राप। मृत्युं पंचनमस्कारस्तुतिं गुणयन् सुभगाशयः सुभगः ॥८॥ तत्रैव ऋषभदासार्हद्दास्योः प्रवररूपलावण्यः। सूनुः सुदर्शनाख्योऽजनि रजनिकरावदातयशाः॥९॥ उपयेमे सुमनोमुकुलाकृतिं स तु मनोरमां कन्याम्। असपत्नशीलरत्नालंकारां जिनमते निपुणाम्॥१०॥ कपिलः पुरोहितस्तस्य मित्रमभवत्ततो भृशं श्रुत्वा। कपिलाख्या तद्भार्या सुदर्शगुनणान् सुरूपादीन्॥११॥ अनुरक्ता ग्रामगते भर्त्तरि तत्तन्वपाटवमिषेण। निन्ये तं निजसद्मनि रिरंसुरथ तमार्थयत बहुधा ॥१२॥ स तु मोचितवांस्तस्या अपंडिते! पंडकोऽहमित्युक्त्वा। नैको गंता परगृहमित्यभिजग्रहे तदा सुमनाः ॥१३॥ कपिलसुदर्शनसहितो राजा रंतुं गतोऽन्यदोद्याने। कपिला पट्सुतसंयुतमनोरमायुगभयाऽपि मुदा ॥ १४ ॥ कपिला प्राक्षीदभयां मनोरमां वीक्ष्य देव! केयं स्त्री?। साऽऽह सुदर्शनगृहिणी कपिलोचे तर्हि कथमस्याः॥१५॥ एतावंतस्तनया? यत्पतिरस्या नपुंसको राज्ञी। आह कथं बुबुधे त्वं? कपिलाऽऽख्यत् पूर्ववृत्तान्तम् ॥१६॥ प्रोचे विहस्य राज्ञी सत्यं षंढोऽयमन्यवनितासु। नूनं विदग्धधुर्येण तेन त्वं वंचिता मुग्धे! ॥१७॥ कपिला सम-

मया विद्धि ॥ १८ ॥ इति वि–दविवशे
न्युरूचे सखि! रमयसि यद्यमुं विदग्धां त्वाम्। तन्मन्ये साऽप्यूचे लघु रमितमिमं मया विद्धि ॥ १९ ॥ फणिफणरत्नं लातुं सटाकटप्रं हरेः
क्रीडित्वा निजनिजं गते धाम। अथ पडितया धात्र्या तद् ज्ञात्वा राश्यदो जगदे ॥ २० ॥ परमार्हतधौरेयं दर्शनं रमयितुं न कदाचित्।
समुत्खनितुम्। गजपतिरदो ग्रहीतुं वरं प्रतिज्ञा कृता वत्स! ॥ २० ॥ परमार्हतधौरेयं दर्शनं रमयितुं न कदाचित्।
अहहह हा ही मुग्धे! तन्ननु बृहदंतरे मूढा ॥२१॥ अभयाऽऽह सकृत्तं मे समर्प्पयानीय तदनु भलिताऽहम्। तस्यानयनोयायान्
सुवहून् सा चिंतयंत्यस्थात् ॥२२॥ साऽथ निशि चतुर्मास्यां राज्ञी पूजामिषात् समानिन्ये। वेश्मन्यस्खलितवसनच्छन्ना यक्षादिलेप्या-
र्चाः॥२३॥ पश्चात् शून्यगृहस्थं सुदर्शनं विहितपौषधप्रतिमम्। आजानुलंबिभुजयुगमानीय पुरोऽमुचद् देव्याः॥२४॥ मशरश-
बरशरभिन्नहृदयया पापविभययाऽभयया। उपसर्गितः स बहुशोऽप्यचलन्न महामनाः शीलात् ॥२५॥ अथ वीक्षापन्ना स्वतनुमत-
नुकोपा विलिख्य नखविशिखैः। पूचक्रे कोऽपि बलात्कारमसौ मयि चरीकर्त्ति ॥२६॥ श्रुत्वेदं प्राहरिकास्तत्रागुर्वीक्ष्य सुदर्शनं नूनम्।
अत्रासंभवमिदमित्युक्त्वा राज्ञे समाचख्युः ॥२७॥ राज्ञाऽभयैव पृष्टा जगदेऽकस्मात् कुतोऽप्ययमिहैत्य। प्रकटितचटुकोटिर्मां रंतु-
मयाचिष्ट पापिष्ठः॥२८॥ ऊचे मयैष मैषीरसतीरिव रे सतीरपि हताश!। किं चर्व्यंते चणका यथा तथा मूढ! मरिचानि ॥२९॥
तदनु च वलिनाऽप्यमुना कृतमेतत् पूत्कृतं मयाऽप्युच्चैः। न घटत इह खल्विदमिति पुनः पुनस्तं नृपोऽपृच्छत् ॥ ३० ॥ स तु
कृपया न किमप्याह नृपतिनाऽचिंति न खलु शुद्धोऽयम्। यल्लक्षणमाद्यमिदं परललनालोलचौराणाम् ॥ ३१ ॥ कोपाटोपात्तलवर
आदिष्टो विहितवध्यमंडनकम्। खरयानं श्रेष्ठिवरं गारेभे भ्र यितुं नगरे ॥३२॥ कृतशुद्धांतागस्को निहन्यते न्यायचंचुना राज्ञा।
श्रेष्ठी सुदर्शनोऽसावित्युच्चैर्घोषयामास ॥३३॥ ध्रुवमिह न घटत इदमिति पूत्कुर्वति पुरजने हहाकारम्। स भ्रममाणो ह्येवं निजस-

दनद्वारदेशेऽगात् ॥३४॥ दृष्ट्वा मनोरमा तं दध्यौ खलु मम पतिः सदाचारः। दयिताचारश्च नृपो विधिर्ध्रुवं तद्दुराचारः ॥ ३५ ॥ इदमप्यसदथवा ध्रुवमिदमस्य महात्मनः समुपतस्थे। प्रागशुभकर्म कर्म्मणः फलमत्रास्ति नहि प्रतीकारः॥३६॥ एष तथाऽपि भविष्यति निश्चित्येति प्रविश्य सदनांतः। अभ्यर्च्य जिनेंद्रार्चाः कृत्वा व्युत्सर्गमित्यूचे ॥ ३७ ॥ सुदृशां स थिकर्त्र्यः प्रवचनभक्ताः सुशांतिकरणपराः। शाशनदेव्यो मद्भर्त्तुरस्ति नहि दोषलेशोऽपि ॥३८॥ श्राद्धजनमस्तकमणेः सांनिध्यं यदि करिष्यथास्य लघु। कायोत्सर्गमिममहं तदा ध्रुवं पारयिष्यामि ॥३९॥ एवं व्यवस्थितायां ममान्यथाकारमनशनं भवतु। तलवरनैरेरितश्च प्राक्षेपि सुदर्शनः शूल्याम् ॥ ४० ॥ शाशनदेव्यनुभावात् सा सपदि स्वर्णकमलतां भेजे। कौक्षेयकप्रहारास्तत्कंठे कुसुममालाऽभूत् ॥ ४१ ॥ तं दृष्ट्वा तैर्विस्मितचकितैर्नरनाथ एत्य विज्ञप्तः। मंक्षु सुदर्शनपार्श्वं प्रययावधिरुह्य वरकरिणीम् ॥४२॥ तं सरभसमालिंग्यानुतापतप्तः क्षितीश इत्यूचे। श्रेष्ठिन्नासि विनष्टो दिष्ट्याऽऽत्मीयानुभावेन ॥४३॥ तावत्पापेन मया किं राज्ञा? त्वं विनाशितोऽसि हहा। संचितसुकृतभराणां जागर्ति सतां परं धर्म्मः ॥४४॥ स्त्रीणां निकृतिगृहाणां प्रत्ययतस्त्वां निहंति यो मूढः। अविमृश्यकरः स पापो न परो दधिवाहनाज्जगति ॥४५॥ किं वाऽहमसि किंचित्पापमिदं कारितस्त्वया साधो!। यद् बहुधाऽपि हि पृष्टो न किमप्याख्यस्तदा मह्यम् ॥४६॥ इत्यालपता राज्ञा करिणीमारोप्य मागधैरुच्चैः। व्यावर्ण्यमानशीलः श्रेष्ठी निजमंदिरे निन्ये ॥४७॥ तदनु स्नातविलिप्तो वस्त्रालंकारभूषितो भुक्तः। राज्ञा पृष्टो रात्रेर्वृत्तं न्यगदद्यथावृत्तम् ॥ ४८ ॥ अभयाऽऽदि हंतुं विमोचिता श्रेष्ठिना नृपं प्रार्थ्य। उद्बंध्य तथापि मृता पचति हि खलु पापिनां पापम् ॥ ४९ ॥ तदनु तनुमतनुपुलकांकुरनिकरां बिभ्रता महाभूत्या। इभमारोह्य श्रेष्ठी राज्ञा तन्मंदिरे नैपि ॥५०॥ नंष्ट्वा दुश्चरितभरैकखंडिता पंडिताऽथ कुसुमपुरे। अगमत्तस्थौ पार्श्वे गणिकाया

देवदत्तायाः ॥५१॥ तत्रापि तथाऽशंसत् सुदर्शनं शुद्धदर्शनं नित्यम् । भृशमुत्सुका यथाऽभूत् सुदर्शने देवदत्ता सा ॥ ५२ ॥ संसृतिविरक्त आत्तव्रतः सुदुस्तपःतपःकृशः क्रमशः । विहरन् सुदर्शनमुनिः कुसुमपुरं प्रापदेकाकी ॥ ५३ ॥ भैक्ष्यकृते स कृती तत्र पर्यटन् वीक्ष्य सपदि पंडितया । कथितोऽसौ देवदत्तां अजूहवत्तं तया साऽपि ॥५४॥ भिक्षाव्याजात् स तयाऽऽहूतस्तत्राप्यगात् पिधायापि। द्वारं दिनं समग्रं कदर्थितो देवदत्तया बहुधा ॥५५॥ मुक्तः स तया सायं प्रययावुद्यानमीक्षितस्तत्र । अभयाव्यंतर्याऽसौ बहुविधमुपसर्गितः कोपात् ॥५६॥ शुक्लध्यानवशेन प्राप सुदर्शनमुनिर्वरं ज्ञानम् । तस्य च केवलिमहिमा विधिना विदधे विबुध-वृंदैः ॥५७॥ अथ तेन महामुनिना देशनया विहितया बहुलोकः । अभयादेवी धात्री प्रतिबुबुधे देवदत्ताऽपि ॥५८॥ मनोरमासंस्मृतशुद्धदृष्टिदेवैः कृतं श्रेष्ठिवरस्य सम्यक् । सादिव्यमेवं विनिशम्य भव्यास्तेषां स्मृतौ धत्त सदाऽपि यत्नम् ॥५९॥ इति सुदर्शन-श्रेष्ठिकथा ॥ इति निगदितं 'सुरा य सरणिज्ज'त्ति चतुर्दशं द्वारं,अथ 'चउह जिण'त्ति पंचदशं द्वारं विभावयिषुर्गाथोत्तरार्द्धमाह—

**चउह जिणा नामठ्ठवणदव्वभावजिणभेएणं**

चतुर्धा—चतुष्प्रकारा जिनाः, कथमित्याह—नामेत्यादि, जिनशब्दोऽत्र पृथक् संबध्यते, ततश्च नामजिन १ स्थापनाजिन २-द्रव्यजिन ३ भावजिन४ भेदेन—नामजिनादिप्रकारेणेति ॥ एतानेव भेदान् विभावयिषुराह—

**नामजिणा जिणनामा ठवणजिणा पुण जिणिंदपडिमाओ ।**
**दव्वजिणा जिणजीवा भावजिणा समवसरणत्था ॥ ४ ॥**

नामैव नामप्रधानतया वा जिना नामजिनाः, कथमित्याह—जिनः अर्हन् पारगत इत्यादिनामानि, यद्वा जिनानां—तीर्थकृतां

नामानि उसभ अजितेत्यादीनि, स्थापनया—लेप्यकर्म्मादिरूपया जिनाः स्थापनाजिना, जिनेंद्राणां प्रतिमा, बिंबानीत्यर्थः॥ पुनः-शब्दो हि न्यस्तानाकारस्थापनाजिनपरिग्रहार्थः। द्रव्यं—दलिकं भूतभाविभावकारणं तदाश्रित्य जिना द्रव्यजिना—ये अर्हत्पदवीं प्राप्य सिद्धा ये च तां प्राप्स्यंति ॥ इह रायपुरे रायासि ईसरो ईसरुव्व गयवसणो। कुसुमुज्जाणे पत्तो कयावि सो रायवाडीए॥१॥ तत्थ नवहत्थमाणं नीलुप्पलसामलं मलविमुक्कं। सच्छसिरिवच्छलंछियवच्छं वंछियपयाणपडुं ॥२॥ अट्ठुत्तरअसरिससहसलक्खणं अस्ससेणवंसमणिं। निम्मियकाउस्सग्गं सिरिपासपहुं नियच्छेइ ॥३॥ हरिसभरपुलइयंगो तुरियं ओयरिय तुरयरयणाओ। महि-मिलियमउलिकमलो भत्तीए नमिय पासजिणं ॥ ४ ॥ अमयमइंपिव उसमवमयं व तइलोयमित्तिमइयं वा। अणमिसनयणो राया पिच्छंतो पासपहुमुत्तिं ॥५॥ ईहापोहवसेणं च मुच्छिओ पुणवि लद्धचेयन्नो। जाइसरो सचिवेणं पुट्ठो इय कहिउमारद्धो ॥ ६ ॥ आसि वसंतपुरंमी दत्तो दियनंदणो स कइयावि। कुट्ठभरविहुरदेहो गंगाइ गओ मरिउकामो ॥७॥ सुरसरिजले पडंतो चारणसमणेण जंपिओ एवं। किं दत्त! दत्तहत्थो धम्मंमि मरेसि मुहयाए? ॥८॥ किं पंचासवविरमणजणियं नीसेसरोगहरणखमं। सिरिजिण-वयणरसायणमेयं न करेसि दढमूढ! ॥ ९ ॥ तो दत्तो जंपइ पहु! मं जाणावसु रसायणं एयं। तह चेव कए मुणिणा सो जाओ सावओ भव्वो ॥१०॥ अन्नदिणे गुणसायरकेवलिणं नमिय पुच्छए एसो। किं सुलहबोहिओऽहं नवत्ति? गुरुराह निसुणेसु ॥११॥ भो भद्द! भद्दपयगमणऊसुओ जइवि तंसि तहवि तुमं। तिरिगइनिकाइयाऊ धुवमंते दंसणा विमुहो ॥१२॥ यतः—संमत्तंमि उ लद्धे विमाणवज्जं न बंधए आउं। जइ न विगयसंमत्तो अहव न बद्धाउओ पुव्विं ॥१३॥ इय दत्तो गुरुवयणं सोऊण अणूणदुक्खसंपत्तो। किह बोहिवज्जिओऽहं होहं इय रोइउं लग्गो ॥१४॥ जं बोहिरयणरहिओ चउदसरयणाहिवोऽवि रोरुव। बोहिरयणेण

सहिओ नूणं रोरोऽवि चक्किव ॥ १५॥ किंच–चक्कित्तं इंदत्तं अहमिंदत्तं जणाण इह सुलहं। अकयसुकयाण न उणो जिणिंदवरसासणे बोही ॥ १६ ॥ तो गुरुकरुणारससायरेण गुणसायरेण मुणिवइणा । भणिओ सो महुरगिरा कीस परितप्पसे ? भद्द ! ॥ १७ ॥ जं पुव्वभवज्जियकडुविवागकम्माण वेयणं मुत्तुं ।अन्नो न अत्थि तक्खवणसंभवो किमिह रुन्नेण ? ॥१८॥ सोसिज्जइ चरममहोयहीवि चालिज्जइ सुरगिरीवि। नहु छुट्टिज्जइ पुव्वज्जियाउ ता किमिह रुन्नेण ? ॥ १९ ॥ किर चक्किणोऽवि चक्कं खलिज्जए वज्जिणोऽवि किर वज्जं। नहु पुव्वकयं कम्मं केणवि ता किमिह रुन्नेण ? ॥२०॥ तो रोयणा पथरिओ दत्तो पुच्छइ कहेसु मह भयवं !। कत्थ कहं वा बोही होही मुज्जो ? भणइ नाणी ॥ २१॥ तं मरिउं रायपुरे गुरोहियरकुक्कुडीइ गब्भंमि। रूवेण उक्कडो होसि कुक्कुडो भो महाभाग ! ॥२२॥ मुणिदंसणाउ पुव्विं जाइं सुमरिय करेवि संनासं। तत्थेव पुरे राया तं होही ईसरो नाम ॥२३॥ तत्थ य कुसुमुज्जाणे तमालदलसामलं नवकरुच्चं ।सिरिआससेणतणयं वंमातणुसरसिकलहंसं ॥२४॥ फणिवइचिण्हियचलणं काउस्सग्गे ठियं जिणं पासं। दट्ठुं सरिउं जाइं भुज्जो होही तुहं बोही ॥ २५ ॥ एवं सुच्चा दत्तो पहिट्ठचित्तो दुहेण परिचत्तो। सुमरंतो अहरीकयकप्पतरुं पासजिणनामं ॥२६॥ पासजिणनाममुमरणवसेण खसखासकुट्ठपरिमुक्को। पूयंतो य तिसज्झं जहविहवं पासपहुपडिमं ॥ २७ ॥ निव्वाणगामिणं तिजयसामिणं भाविणंपि पासजिणं। कयपाडिहेरसोहं चउतीसातिसयपरिकलियं ॥२८॥ वाणीए जोयणगामिणीइ बोहं नयंति जयलोयं। एगग्गमणो सुमणो झायंतो निच्चमुवउत्तो ॥ २९ ॥ वरनाणिकहियविहिणा भो मंतिस एसऽहं इहं जाओ। सिरिपासदंसणाओ संपत्तो जाइसरणं च ॥३०॥ पुव्वभवे नामठवणदव्वभावारिहंतसरणेण। अज्जियगुरुपुन्नेणं पत्तं मे बोहिवररयणं ॥३१॥ तो कुक्कुडेसराभिहमीसरराया पमोयभरभरिओ। कारावइ जिण-

भवणं अलंकियं पासपडिमाए ॥३२॥ तत्थ य अब्भुयभूयं पूयं कारइ महाविभूईए। वायावइ आउज्जे सज्जो सज्जियमहापूओ ॥३३॥ गोसे नियपासाए रिपासपहुस्स पूइउं पडिमं। सामंतमंतिसुद्धंतकुमरचउरंगबलकलिओ ॥३४॥ गयखंधगओ सिरिउवरिधरियछत्तो चलंतसियचमरो। कित्तिज्जंतो मागहगणेण परमारिहंतुत्ति ॥३५॥ कयपवयणबहुमाणाण बोहिलाभं जणाण वड्ढंतो। सव्विड्ढीइ समेओ राया वच्चेइ चेइगिहे ॥३६॥ विहिणा पूएवि सुपुन्नपुन्नचिइवंदणाइ वंदित्ता। सिरिपासपहुं पत्थेइ होसु मह बोहिलाभाय ॥ ३७ ॥ सुचिरं ईसरराया सिरिजिणवरपवयणं पभावित्ता। पासपहुपासगिण्हियपव्वज्जो सुगइमणुपत्तो ॥ ३८ ॥ इतीश्वरक्षोणिभृतश्चरित्रं, निशम्य सम्यग् भविकाः! पवित्रम्। नामाकृतिद्रव्यसुभावभेदान्, चतुर्विधान् ध्यायत तज्जिनेंद्रान् ॥ ३९ ॥ इतीश्वरनरेश्वरकथा ॥ उक्तं 'चउह जिण'त्ति पंचदशं द्वारं, एवं च द्वादशद्वारे उ । द्वादशाधिकाराः,त्रयोदशचतुर्दशपंचदशेतिद्वारत्रयेऽधिकारिणश्च प्रतिपादिताः। अथ यत्राधिकारे यः स्तूयते तत्प्रतिपादनाय गाथात्रयमाह—

पढमहिगारे वंदे भावजिणे वीययंमि दव्वजिणे। इगचेइय ठवणजिणे तइय चउत्थंमि नामजिणे ॥३२॥
तिहुअण ठवणजिणे पुण पंचमए विहरमाणजिण छट्ठे। सत्तमए सुयनाणं अट्ठमए सव्वसिद्धथुई ॥३३॥
तित्थाहिववीरथुई नवमे दसमे य उज्जयंतथुई। अट्ठावयाइ इगदसि सुदिट्ठि र मरणा चरिमे ॥ ३४ ॥

प्रथमे-आद्ये शक्रस्तवरूपेऽधिकारे-स्तोतव्यविशेषस्थाने वंदे-सद्भूत णोत्कीर्त्तनेन स्तवीमीति, भावजिनान्-भावार्हतश्चतुस्त्रिंशदतिशययादिमत्त्वमर्हद्भावं प्राप्तानुत्पन्नकेवलज्ञानान् समवसरण ांस्तीर्थकृत इ र्थः, तथैव संपूर्णमर्हद्भावभावात्, भणितं च—'भावजिणा समवसरणत्थ'त्ति १, तथा द्वितीये 'जे अ अईय'त्ति गाथालक्षणेऽधिकारे वंदे इति सर्वत्रापि योज्यं, द्रव्यजिनान्—

द्रव्यार्हतो येऽष्टमहाप्रातिहार्यादिकां तीर्थकृल्लक्ष्मीं प्राप्य सिद्धाः ये च तस्मिन्नन्यस्मिन् वा भवे तां प्राप्स्यंति, न च तदानीं प्राप्त-
वंतस्तान्, अर्हत्त्वद्रव्यान् जिनजीवानित्यर्थः, उक्तं च—"भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद् द्रव्यं तत्त्वज्ञैः
सचेतनाचेतनं कथितं ॥२॥ तथा 'एकचैत्यस्थापनाजिनान्' यत्र देवगृहादौ चैत्यवंदनं कर्तुमारब्धं तत्र स्थापितानि यानि जिन-
बिंबानि तानीत्यर्थः तृतीये 'अरिहंत चेइयाण'मितिदंडकरूपे ३, तथा चतुर्थे—चतुर्विंशतिस्तवात्मके नामजिनान् जिननामानि,
अस्यामवसर्पिण्यां भरतक्षेत्रवर्त्तितयाऽऽसन्नत्वादिनोपकारित्वाच्चतुर्विंशतिमपि जिनान्नामोत्कीर्त्तनेन स्तौमीत्यर्थः ४ ॥ ३२ ॥
त्रिभुवने ऊर्ध्वाधस्तिर्यग्लोके स्थापनाजिनान् शाश्वताशाश्वतचैत्यस्थापितार्हत्सिद्धप्रतिमारूपान् पंचमके 'सव्वलोए अरिहंतचेइया-
ण'मितिकायोत्सर्गदंडकलक्षणेऽधिकारे वंदे इति योज्यं, अत्र चार्हत्सिद्धप्रतिमारूपानिति प्रकारांतरसूचकः पुनःशब्द इत्यायातं,
भणितं चावश्यकचूर्णिकारेण सिद्धप्रतिमानामपि वंदनपूजनादि, तथा च प्रतिक्रमणाध्ययने 'सव्वलोए अरिहंतचेइयाण'मिति
दंडकचूर्णिः—जे सव्वलोए सिद्धाई अरिहंता चेइयाणि य तेसिं चेव प्रतिकृतिलक्षणानि, चिती संज्ञाने, संज्ञानमुत्पद्यते काष्ठकर्मा-
दिषु प्रकृतिं दृष्ट्वा जहा अरिहंतपडिमा एसत्ति, सिद्धादिप्रतिमेत्यर्थः, अन्ने भणंति—अरिहंता तित्थयरा तेसिं चेइयाणि अरिहंत-
चेइयाणि, अर्हत्प्रतिमेत्यर्थः अत्र च अन्ने भणंति अरहंता तित्थयरा इत्यादि भणता चूर्णिकृता पूर्वव्याख्याने सिद्धप्रतिमाः पृथक्
स्पष्टं निष्टंकिताः, अन्यथा द्वितीयव्याख्यानं निष्फलं स्यात्, एवं च सिद्धप्रतिमासिद्धौ तासां वंदनपूजनाद्यपि करणीयपथायातं,
तत्प्रत्ययं च कायोत्सर्गाद्यपि, उक्तं चैतदावश्यकचूर्णौ, तथाहि—'पूज्यत्वात्तेषां पूजनार्थं कायोत्सर्गं करोमि श्रद्धादिभिर्वर्द्धमानैः,
सद्गुणसमुत्कीर्त्तनपूर्वकं कायोत्सर्गस्थानेन पूजनं करोमीत्यर्थः, जहा कोइ गंधचूर्णवासमल्लाइएहिं समभ्यर्चनं करोतीति । एतं

सक्कारवत्तियाए संमाणवत्तियाएवि भावेयव्वं, नवरं सक्कारो जहा वत्थाभरणाईएहिं सक्कारणं, संमाणो संमं मन्नणं'ति।' एतावता च सिद्धप्रतिमानामप्यग्रे अरिहंतचेइयाणमित्यपि दंडकः पाठाय संगच्छते, शब्दार्थयोस्तत्रापि समानत्वात्, पर्युपास्या इहार्थे बहुश्रुताः, तथा श्रीजिनभद्रगणिक्षमाश्रमणैरपि विशेषावश्यके साक्षेपं स्थापिता सिद्धपूजा, तथा च–कुज्जा जिणाण पूया परिणामविसुद्धिहेउओ निच्चं। दाणादओ सम्मग्गप्पभावणाओ य कहणं व ॥१॥ तट्टीका–कार्या जिनसिद्धपूजा स्वपरिणामविशुद्धिहेतुत्वाद्दानादिक्रियावत्, अथवा कार्या जिनसिद्धपूजा मार्गप्रभावनात्मकत्वाद्धर्मकथावत् ॥१॥ चोयग–पूयाफलदो य न सो नहं व कोवप्पसायविरहाओ। दिट्ठंतो वेहम्मेण साहम्मेणं निवाई य ॥२॥ आचार्यः–कोवप्पसायरहियंपि दीराए फलयमन्नपाणाई। कोवप्पसायरहियत्ति निप्फलत्ते अणेगंतो ॥३॥ इत्यादि। पूजिता च मरुदेवास्वामिनी प्रथमसिद्ध इतिकृत्वा देवैः, कारिताश्च सिद्धप्रतिमा भरतेनाष्टापदोपरि, एतयोः प्रबंधश्चायं–आर्यानार्येषु मौनेन, विहृत्याब्दसहस्रकम्। पुरे पुरिमतालाख्ये, ययौ श्रीवृषभोऽन्यदा ॥१॥ उद्याने तत्र शकटमुखे वटतरोरधः। उत्तराषाढभे कृष्णैकादश्यां फाल्गुने विभुः ॥२॥ पूर्वाण्हेऽष्टमभक्तेन, केवलज्ञानमासदत्। महिमानं ततश्चक्रुः, सर्वे देवाः सुरादयः ॥३॥ भरतस्यायुधागारे, चक्ररत्नं तदाऽजनि। युगपत्केवलं तच्च, राज्ञे पुंभिर्निवेदितम् ॥४॥ अचिंतयत्ततो राजा, किं पूज्यं प्रथमं मया?। क्षणान्निर्णीतवांस्तातः, पूज्यः प्रेत्यसुखावहः ॥५॥ रुदंती पुत्रशोकेन, नीलच्छन्नदृशं ततः। सिंधुरस्कंधमारोप्य, मरुदेवीं स्वयं नृपः ॥६॥ जिनं नंतुं व्रजन्नूचे, मातः! पश्य प्रभोः श्रियम्। अनन्यसदृशीं देवासुराणामपि दुर्लभाम् ॥ ७ ॥ हर्षाश्रुप्रगलच्छाया सा पश्यंती प्रभुश्रियम्। क्षणात् कर्मक्षयं कृत्वा, निर्वृत्ता शुभभावतः ॥ ८ ॥ ततः प्रथमसिद्धोऽयमित्यभ्यर्च्य कलेवरम्। तस्याः क्षीरमहांभोधौ, चिक्षिपेऽनिमिषैर्मुदा ॥ ९ ॥ उक्तं चावश्यकचूर्णौ–'भयवओ य

छत्ताइछत्तं पिच्छंतीए चेव केवलनाणं उप्पन्नं, तंसमयं च णं आउयं डं, सिद्धा, देवेहि य से पूया कया पढमसिद्धोत्तिकाऊणं' अथ छायातपाभ्यां हि, शरत्काल इव क्षणात्। नृपो हर्षविषादाभ्यां, युगपत् सस्वजेतराम् ॥१०॥ ततः समव त्यंतर्गत्वा नत्वा जगद्गुरुम्। निषद्य च यथास्थानमश्रौषीद्देशनामिति ॥११॥ जीवाः सुखैषिणः सर्वे, तन्मोक्षे मुख्यमक्षयम्। स च ज्ञानक्रियाभ्यां हि, यतध्वं तत्र तज्जनाः! ॥ १२ ॥ श्रुत्वेमां देशनां भर्तुः, प्राव्राजीद्भरतात्मजः। पुंडरीकस्तथाऽन्येऽपि, साधवो बहवोऽभवन् ॥१३॥ साध्व्यो ब्राह्म्यादिकाः श्राद्धा, भरताद्यास्तु दरी। व्रताय तेन नो मुक्तास्तदाद्याः श्राविकास्ततः॥१४॥ कृत्वेत्याद्यं विभुः संघं, विजह्रेऽन्यत्र तीर्थकृत्। भरतस्तु गृहं गत्वा, चक्रमानर्च कृत्यवित् ॥१५॥ विहृत्याब्दसहस्रोनं, कैवल्ये पूर्वलक्षकम्। दिशन् पंच यमान् पंचधनुःशतमितिः प्रभुः॥१६॥ नष्टापदग्रणीः शैलेऽष्टापदेऽ पदद्युतिः। कर्म्मेभाष्टापदोऽष्टापदादिव्यसनहृद् ययौ ॥१७॥ तृतीयारे स सार्द्धाष्टमासत्र्यष्टावशेषके। माघकृष्णत्रयोदश्यां, पूर्वाण्हेऽभीचिगे विधौ ॥१८॥ चतुर्दशेन भक्तेन, दशसाधु-सहस्रयुक्। पुत्रैर्नवनवत्याऽमा, मोक्षं प्राप वृषध्वजः ॥ १९ ॥ सुरासुराश्च चक्री च, पूर्वायातास्ततः प्रभोः। विधिवच्चक्रिरे मोक्ष-महं कृत्वा चितित्रयम् ॥२०॥ पूर्वापाच्यपराशास्वर्हत्तद्वंशजजन्मिनाम्। शेषाणां च क्रमाद् वृत्तां, त्रिकोणां चतुरस्रिकाम् ॥२१॥ चैत्यं सिंहनिषद्याख्यं, वर्द्धकिं चक्रचकारयत्। चतुर्द्वारं चतुर्द्विस्त्रिकोशदीर्घपृथूच्चकम् ॥२२॥ तन्मध्ये वृषभाद्यर्चाः, वर्णप्रमा-णतः। चतुर्विंशतिमेकं च, बहिस्तूपं प्रभोर्नरम् ॥२३॥ स्तूपशतं तथैकोनभ्रातॄणां प्रतिमाशतम्। भक्त्या स्वार्चां च तत्रादौ, दंडेन ै पदानि च ॥२४॥ उक्तं चावश्यके श्रीभद्रबाहुस्वामिपादैः—"थूभसय भाउयाणं चउवीसं चेव जिणहरे सी। सव्वजिणाणं पडि-मा वण्णपमाणेहिं संजुत्ता ॥१॥ एतच्चूर्णिः—भाउयसयस्स तत्थेव पडिमाओ कारवेइ, अप्पणो य पडिमं पज्जुव तियं, सयं च थूभाणं,

एगं तित्थयरस्स अवसेसाण एगूणस्स भाउयसयस्स, मा तत्थ कोइ अइगम्मिस्सइत्ति लोहमणुया अइगंतुं न सक्कंतित्ति, अयमेव च स्तूपशतविषयोऽर्थो महापुरुषचरिताख्यग्रंथे श्रीऋषभदेवनिर्वाणोद्देशके व्यक्ततरमेवं भणितः,तथाहि-वड्डइणा कारवियं तत्थुत्तुंगे नगंमि थूहसयं । मणिकणयरयणचित्तं कंचणपडिमाहि संपुन्नं ॥१॥ पंचधणूसयमाणा इक्किक्का पडिम तत्थ मज्झंमि । नाणाविहरयणविभूसियत्ति इक्किक्कइक्किक्के ॥ २ ॥ अट्ठमहापाडिहेरा पडिमा उसहस्स पढममह थूवे । सेसा अणुक्कमेणं केवलिपडिमाओ कारेइ ॥ ३ ॥ सक्कसहाओ राया सुमेरुसिहरेव्व कणयकलसेहिं । अहिसिंचिउं सयंचिय हरिचंदणचच्चए देइ ॥४॥ पुप्फोवयारबलिधूवचंदणं देवराय जोएवि । चिम्हइओ चित्तेणं थूहा सेलो विभावेति ॥५॥ सयसिंगो इव सेलो दीसइ धयधूव्वमाणसिहरेहिं । रयणावलीसमुट्ठिअगयणंगण सक्कचावेहिं ॥६॥ अन्यत्राप्युक्तं–'चउवीसं तित्थयरा फुरंतवररयणपंचवन्नेहिं। एवं विहीइ भाउयसयस्स थूभाणि कारेइ ॥७॥ पडिमाउ तत्थ तेसिं पइट्ठिया ण्हवणमाइ सक्कारं । पूयंतकयपणामो भत्तीइ सपरियणो भरहो॥८॥''त्ति । कारयित्वेति तत्तीर्थं,चक्रयागत्य निजां पुरीम् । भेजे भोगान् चिरं पूर्वपुण्योपात्तान् यथासुखम् ॥९॥ श्रुत्वेति सिद्धप्रतिमार्चनाग्रं, विनिर्म्मितं श्रीभरतामराद्यैः। भो भव्यभावा भविकाः! प्रयत्नमेतद्विधाने विधिना विधत्त ॥१०॥ इति मरुदेवादिप्रबंधः। तथा 'विहरमाणजिनान् पष्ठे' पंचदशकर्मभूमिषु विहारं कुर्वाणान् सूत्रार्थकथनपरायणान् भावार्हत इत्यर्थः, उक्तं च–''पढमे छट्ठे नवमे दसमे एगारसे य भावजिणे'' । वंद इति तत्र प्रकृतं,ते च जघन्यतो विंशतिरुत्कृष्टतः सप्ततिशतं भवति,आह च–''सत्तरिसयमुक्कोसं जहन्नओ विरहमाण जिण वीसं । जम्मं पइ उक्कोसं वीसं दस हुंति उ जहन्नं॥१॥''ति, आवश्यकचूर्णौ तु द्रव्यार्हतोऽप्यत्र व्याख्याताः, तथाचोक्तं–उक्कोसपएणं सत्तरिं तित्थयरसयं जहण्णपएणं वीसं तित्थयरा, एए ताव एगकाले भवंति, अईया अणागया अणंता ते

तित्थगरे नमंसामित्ति षष्ठे पुक्खरवरदीवड्ढे इति गाथात्मके६, तथा सप्तमे 'तिमिरे'त्यादिस्वरूपे श्रुतज्ञानम्—अंगानंगप्रविष्टं सिद्धांतं वंदे इति पूर्वगाथातो योज्यं ७, तथा अष्टमके सिद्धाणमिति गाथायां सर्वेषां तीर्थसिद्धादिभेदभिन्नानां नामस्थापनादिरूपाणां वा सिद्धानां—क्षपितकर्म्मांशानां स्तुतिः क्रियत इति गम्यं ८ तीर्थाधिपस्य—वर्त्तमानतीर्थस्य प्रवर्त्तकत्वान्नाथस्य वीरस्य—वर्द्धमानस्वामिनः स्तुतिर्विधीयते, आसन्नतरतया महोपकारित्वात् नवमेऽधिकारे 'जो देवाणवी'त्यादिगाथाद्वयरूपे९, तथा दशमे च 'उज्जितसेले'तिगाथाप्रमाणे उज्जयंतत्ति 'तात्थ्यात्तद्व्यपदेश' इति न्यायात् उज्जयंतपर्वतालंकरणस्य श्रीनेमिनाथस्य स्तुतिर्विधीयते, चशब्दो विशेषकस्तेनायं जिनस्तुतित्वात् दर्शनविशोधकत्वात् कर्म्मक्षयादिकारकत्वात् संवेगादिकारणत्वात् बहुबहुश्रुतानिवारितत्वात् जीतव्यवहारानुपातित्वात् भाष्यकारादिभिर्व्याख्यातत्वात् आवश्यकचूर्णिकृतोऽप्यनुमतत्वात् अनिषिद्धत्वात् पारंपर्यागतस्यार्थस्य स्वमत्या निषेद्धुमशक्यत्वात् निषेधे निह्नवमार्ग्गानुपातित्वात् आज्ञाप्रकारत्वाच्चेत्यतो युक्त एवायमेवमग्रेतनोऽपि१०,तथा एकादशे चत्तारि अट्ठ दसेतिगाथास्वरूपे अट्ठावयत्ति सूचनात् अष्टापदपर्वतोपरिभरतनिर्मापितवर्त्तमानचतुर्विंशतिजिनस्तुतिः क्रियते, निगमार्थत्वात् अस्येति, यद्वा 'अट्ठावय'त्ति उपलक्षणं तेनान्यत्रगा अपि जिना अनया गाथया वंद्यन्ते, तत्र यथेयं वृद्धैर्व्याख्याता तथा भव्यानां भाववृद्धये किंचिद् दर्श्यते—चत्तारि अट्ठ दस दो य वंदियाजिणवरा चव्वीसं। परमट्ठनिट्ठिअट्ठा सिद्धा सिद्धिं मम दिसंतु ॥१॥ दाहिण दुवारे चत्तारि पच्छिमे अट्ठ उत्तरे दस पुव्वओ दो य एवं अट्ठावए चउवीसं जिणवरा वंदिज्जंति,अन्ने भणंति—उवरिममेहलाए चत्तारि, मज्झिमाए अट्ठ, हिट्ठिमाए दस दो य १२, मिलिया चउवीसं जिणपडिमाओ अट्ठावए वंदिज्जंति १ चत्ता अरओ जेहिं ते चत्तारओ एयं विसेसणं, अट्ठ ८ दस १० दो य २ एवं वीसं, चतुश्चशब्दौ विशेषज्ञापकाद्यर्थेषु यथायोगं

योज्यौ, एए संमेयपव्वए वंदिया, परमट्ठेण, न उवयारेण, निट्ठियट्ठा समाप्तप्रयोजनाः, सिद्धाः–शिवं गताः, 'षिधू गत्या'मिति वचनात् २ चत्तारि पयं पुव्वंव, अट्ठ दससु मिलिता १८ दोयत्ति द्योपाः–स्वर्गपाः इंद्रा इत्यर्थः, चउहिं वीसं भइया लद्धा पंच, ते अट्ठारससु मेलिया तेवीसं, एए सितुञ्जे वंदिज्जंति, कहं?, परा–पहाणा मा–लच्छी समोसरणाइया तत्थ ठिया, समोसरिया इत्यर्थः, निट्ठियट्ठा संपन्नफला केवलनाणसंपत्तीए, यदागमः–"जस्सट्ठाए कीरइ नग्गभावे मुंडभावे अण्हाणए अदंतवणे इत्यादि", सिद्धाः–शास्तारो बभुवुः मंगलभूताश्च 'षिधू शास्त्रमांगल्ययोरितिवचनात् ३, चउहिं अट्ठ गुणिया३२ दोहि य दस २०, मिलिया बावन्ना नंदीसरजिणाययणा वंदिज्जंति, चउसद्दा मयंतरेण पुण वीसं, अहवा चउरहिया वीसं १६, एए नंदीसरे सोहम्मीसाणिंदग्गमहिसीरायहाणीसुं संति, मयंतरे पुण चउवीसं परं अट्ठसहिया३२, एवं नंदीसरे दीवे ५२–२० वा रायहाणीसु१६+३२ वा, परमट्ठेण, न वर्णनामात्रेण, निट्ठिया–निष्ठां प्राप्ताः आस्था—आस्थानं रचनेत्यर्थः येषां ते तथा, सिद्धा–नित्या अपर्यवसानस्थितिकत्वात् ४ चत्तारि जंबुदीवे अट्ठ धायइसंडे दस नवरं दो य रहिया पुक्खरवरद्धे एवं वीसं जिणा संपइ जहन्नओ विहरमाणा वंदिज्जंति, जम्मं पइ उक्कोसओ वा, चतुश्शब्दो प्राग्वत, परमट्ठनिट्ठिअट्ठा भाविनि भूतवदुपचारात् सिद्धाः–प्रख्याता भव्यैरुपलब्धगुणसंदोहत्वात्५ चत्ता अरी जेहिं ते चत्तारि कज्जमाणे कडे इत्यादि वचनात्, के अरी?–अट्ठ कम्माणि, के चत्तारि?–दस, ते उ दो यत्ति दुहिं भेएहिं हुंति, जहन्नजम्मपयभरहेरवयदसगविहरमाणजिणभेएहिं, च पूरणे, 'उव्वी'त्ति उर्व्वीशाः–पृथ्वीस्वामिनः शेषं प्राग्वत् ६, अट्ठ दसहिं गुणिया ८० सा दोहिं गुणिया १६०, सेसं पुव्वंव, एवं सव्वविहरमाणजिणा वंदिया ७, अट्ठ अट्ठहि गुणिया ६४ दस दसहिं गुणिया १००, तओ चत्तारि ४ दो य २ सव्वे मेलिया जायं सत्तरिसयं १७०, एए पन्नरसकम्मभूमिसु उक्कोसओ

विहरमाणा वंदिज्जंति ८, अट्ठदस १८ चउहिं गुणिया ७२, एएहिं तिन्नि चउवीसीओ भवंति, ताओ य इह भरहे अतीयाणागयवट्टमाणा चउवीसिगतिगस्सरूवी तित्थयरा वंदिज्जंति, चत्तारि अट्ठ मिलिया १२ ते दसगुणिया १२० एए पंचचउवीसी पंचसु भरहेसु वट्टमाणाउ वंदिज्जंति १०, अट्ठ दसहिं गुणिया ८० ते चेव दसमिलिया ९० सा चउहिं गुणिया ३६०, एए पनरस चउवीसीओ पंचसु भरहेसु कालत्तयसंभवाउ वंदिज्जंति ११, एए चेव तिन्नि पगारा जहा ७२, १२०, ३६० दोहिं गुणिज्जंति जाया १४४, २४०, ७२० चउविसी किज्जंति जाया ६, १०, ३० चउवीसीउ, ताओ क्रमसो पुव्वभणियत्थेण भरहेरवएसु समगं वंदिज्जंति १२, अणुत्तरेसु १ गेविज्जेसु २ कप्पेसु ३ जोइसिएसु य ४ एवं उड्ढं चत्तारि भेया, अहो य वंतरेसु अट्ठभेएसु अट्ठ ८ दसभवणवासीसु दस १० महियले सासयअसासयभेया दो य २ एवं तिहुयणे जिणाययणेसु चउवीसजिणाययणेसु चउवीसं जिणवरा वंदिया १३, जहा पुण जंबूदीवे ६३५ धायइसंडे १२७२ पुक्खरवरद्धे १२७६ मणुयलोयबहिं ९२ तिरियलोए वा सव्वसंखाए ३२७५ चेइयसयाइं ताइं ताइं सयमेव तहा नियसंखाए आणिऊण वंदेयव्वा, विस्तारभयाच्च नोच्यंते, एवं अणेगहा एगारसंमि अहिगारे जिणवरा वंदिज्जंति, चत्तारि अट्ठगुणिया ३२ ते दसगुणिया ३२० ते य दोहिं गुणिया ६४०, वीसं चउहिं भइया लद्धा ५ तेहिं रहिया ६३५ एए जंबुद्दीवे ११॥ तथा सुद्दिट्ठिसुराणां—सम्यग्दृष्टिदेवतानां स्मरणात् तत्तत्प्रवचनादिविषयवैयावृत्त्यादिकार्यविधानोपयोगप्रभृतिगुणगणानुचिंतनाद्योत्कीर्त्तनादिनोपबृंहणाय वा, धन्याः पुण्यवंतो लब्धजीवितादिफला भवंतो यदेवं सदनुष्ठानोद्यताः, युक्तमेवेदं भवादृशां सुस्थानविनियोगफलत्वात् संपदः, उक्तं च—"तं नाणं तं च विन्नाणं, तं कलासु य कोसलं। सा बुद्धी पोरिसं तं च, देवकज्जेण जं वए ॥१॥" इत्यादिप्रशंसाद्वारेण तत्तत्कृत्यप्रोत्साहनेत्यर्थः, अथवा स्मरणा संघादिविषये प्रमादिनां

श्लथीभूतवैयावृत्त्यादितत्कृत्यानां संसारणा चरमे—द्वादशेऽधिकारे वैयावच्चगराणमित्यादिकायोत्सर्गकरणतदीयस्तुतिदानपर्यंते, क्रियते इति शेषः, औचित्यप्रवृत्तिरूपत्वात् धर्मस्य, अवस्थानुरूपव्यापाराभावे गुणाभावापत्तेः, यतः—"औचित्यमेकमेकत्र, गुणानां कोटिरेकतः। विषायते गुणग्राम, औचित्यपरिवर्जितः ॥ १ ॥" अपिच—अनौचि प्रवृत्तौ महानपि मथुराक्षपकवत् कुबेरदत्ताया भवत्यल्पानामपि ग्रत्युच्चारणादिभाजनं, आह च—"आरंकाद् भूपतिं यावदौचित्यं न विदंति ये। स्पृहयंतः प्रभुत्वाय, खेलनं ते सुमेधसाम् ॥१॥" इदमत्र तात्पर्यं—सर्वदाऽपि स्वपरावस्थानुरूपचेष्टया सर्वत्र प्रवर्त्तितव्यमिति, उक्तं च—"सदौचित्यप्रवृत्त्या सर्वत्र प्रवर्त्तितव्यमित्यैदंपर्यमस्ये"ति ॥ मथुराक्षपककुबेरदत्तादेव्योः संविधानकं त्विदं—इह कुसुमपुरे नयरे दढधम्मो दढरहो निवो आसि। उचियपडिवत्तिवल्लीपल्लवणे सजलजलवाहो ॥१॥ सरए कयावि सो अब्भमंडलं गयणमंडले जाव। परिसप्पिरं समंता पासायतलट्ठिओ नियइ ॥ २ ॥ ता सहसा तं पडुपवणपडिहयं दट्ठु चिंतइ विरत्तो। खणदिट्ठनट्ठरूवा अहह कहं सव्वभावठिई ! ॥ ३ ॥ तथाहि—संपच्चंपकपुष्परागति रतिर्मत्तांगनापांगति, स्वाम्यं पद्मदलाग्रवारिकणति प्रेमा तडिद्दंडति। लावण्यं करिकर्णतालति वपुः कल्पांतवातभ्रमद्दीपच्छायति यौवनं गिरिनदीवेगत्यहो देहिनाम् ॥ ४ ॥ इय चिंतिउं सविणयं विणयंधरसुगुरुपासगहियवओ। गीयत्थो विहरंतो पत्तो स कयावि महुरपुरिं ॥ ५ ॥ तत्थ ठिओ चउ सं कुबेरदत्ताइ देवयाइ गिहे। दुत्तवतवचरणरओ निरओ आयावणविहाणे ॥६॥ विगहानिद्दाइपमायवज्जिओ उज्जुओ हज्झाणे। वासीचंदणकप्पो समो य माणावमाणे ॥७॥ तं दट्ठु हट्ठतुट्ठा कुबेरदत्ताऽऽह भो ! मुणिवरिट्ठ !। प य मह कह किं ते करेमि मणइच्छियं कज्जं ?। ८ ॥ भणइ मुणी उचियन्नू भावन्नू दव्वखित्तकालन्नू। मं वंदावसु भद्दे ! सुमेरुसिहरट्ठिए देवे ॥९॥ देवी भणेइ एवं करेमि करसंपुडे ठवेऊण। नेउं

सुमेरुसिहरे लहु वंदावेमि तं देवे ॥ १० ॥ आह मुणी जइ हुज्जिह थीसंघट्टो वयाइयारकरो। ता मज्झ धम्मसीले! अलमित्थ मणोरहेणिमिणा ॥११॥ तो सविसेसं तुट्ठा कुवेरदत्ता बहिं विणिम्मेइ। गयणयलमणुलिहंतं सुकिंकिणीजालकयसोहं ॥ १२ ॥ वरसव्वरयणमइयं सुमेरु-जिणवरसुपासअप्पडिमपडिमसमलंकियं अइविसालं। उत्ताणनयणघणपिच्छणिज्जतियमेहलाकलियं ॥१३॥ तं थूभरयणमब्भुयभूयं दट्ठूण मिच्छदिट्ठीवि। तइया नामंकियं महाथूभं। तं दट्ठु विम्हियमणो स मुणी वंदइ तहिं देवे ॥१४॥ इय तंमि थूभरयणे सुपासजिणकालसंभवंमि सया। सुरकिज्जमाणपिक्खणखणंमि हरिसुकरिसा जाया जिणसासणे भत्ता ॥१५॥ इत्थंतरंमि खवणो सुदंसणो नाम उग्गतवचरणो विहरइ वसुहावलए महुराखवगुत्ति सुपसिद्धो सुबहू गओ कालो ॥ १६ ॥ ॥१७॥ भवणे कुवेरदत्ताइ संठिओ सो कयाइ चउमासे। आयारमाइनिरओ दुक्करतवचरणकिसियंगो ॥ १८ ॥ तत्तिव्वतवाकंपिय-हियया सा देवया भणइ सुमुणिं!। मह कहसु किंपि कज्जं जेणं तं लहु पसाहेमि ॥ १९ ॥ मुणिराह अणुचियन्नू किं मह कज्जं असंजईइ तए?। साऽऽह मए तुह कज्जं असंजईइवि धुवं होही ॥२०॥ इय भणिउं अणुचियवयणसवणउप्पन्नमन्नुविवसमणा। देवी गया सठाणं मुणीवि अन्नत्थ विहरित्था ॥२१॥ अह तत्थ निवसहाए थूभकए सेयवुद्धभिक्खूणं। जाओ महं विवाओ छम्मासे जाव नहु छिन्नो ॥२२॥ संघेण तओ भणियं को छित्तुमलं विवायमेयं तु। हुं हुं मथुराखवगो तत्थ इमो झत्ति आहूओ ॥२३॥ तेण तवेणाकंपियहियया पत्ता कुवेरदत्ताऽऽह। किं ते करेमि कज्जं? स भणइ तं कज्जमाह इमा ॥२४॥ किं तुह असंजईएऽवि इण्हिं मए नणु पओयणं जायं। तो अणुतावा साहू से मिच्छादुकडं देइ ॥२५॥ सा भणइ खवगपुंगव! सेयपडागाइदंसणा थूभो। गोसे तहा जइस्सं जह जिणइ इमो नियसंघो ॥ २६ ॥ इइ देवयाइ वयणं सोउं खवगो कहेइ संघस्स। संघोऽवि गंतु साहइ एवं रन्नो जह

नरिंद! ॥ २७ ॥ जइ अम्ह एस थूभो तो इह होही पए सियपडागा। अह भिक्खूणं तत्तो रत्ता इय णिय नरनाहो ॥ २८ ॥ तं थूभं रक्खावइ समंतओ नियनरेहिं अह देवी। पवयणभत्ता घट्टइ थूभे गोसे सियपडागं ॥ २९ ॥ तं पिच्छवि अच्छरियं अतुच्छहरिसो निवो पुरीलोओ। उक्किट्ठिकलयलरवं कुणमाणो भणइ वयणमिणं ॥ ३० ॥ जयउ जए सइ कालं एसो जिणनाहदेसिओ धम्मो। जयउ इमो जिणसंघो जयंतु जिणसासणे भत्ता ॥३१॥ दट्ठुं सुदिट्ठिसुरसुमरणे उच्छप्पणं पवयणस्स। थिरयरओ खवगो पालिऊण चरणं गओ सुगयं ॥ ३२ ॥ मथुराक्षपकचरित्रं श्रुत्वेत्यौचित्यचंचवो भव्याः!। प्रवचनसमुन्नतिकरीं सुदृष्टिसुरसंस्मृतिं कुरुथ ॥३३॥ इति मथुराक्षपककथा। अथ येऽधि· रा यत्प्रमाणेन भण्यंते तदसंमोहार्थं प्रकटयन्नाह—

**नव अहिगारा इह ललियवित्थरावित्तिमाइअणुसारा। तिन्नि सुयपरंपरया बीयो दसमो इगारसमो॥ ३५ ॥**

इह द्वादशस्वधिकारेषु मध्ये नव अधिकाराः प्रथमतृतीयचतुर्थपंचमषष्ठसप्तमाष्टमनवमद्वादशस्वरूपा या ललितविस्तराख्या चैत्यवंदनामूलवृत्तिस्तस्या अनुसारेण-तत्र व्याख्यातसूत्रप्रा ण्येन, भण्यंत इति शेषः,तथा च तत्रोक्तं "एतास्तिस्रः स्तुतयो नियमेनोच्यंते, केचित्त्वन्या अपि पठंति, न च तत्र नियम इति न च तद्व्याख्यानक्रिया, एवमेतत्पठित्वा उपचितपुण्यसंभारा उचितेषूपयोगफलमेतदिति ज्ञापनार्थं पठंति-वेयावच्चगराणमि ादि", अत्र च एता इति सिद्धाणं बुद्धाणं १ जो देवाणऽवि २ इक्कोऽवि इति ३, अन्या अपीति उज्जिंतसेल १ चत्तारि अट्ठ २ तथा 'जे अ अईये'त्यादि ३, अत एवात्र बहुवचनं संभाव्यते, अन्यथा द्विवचनं दद्यात्, 'पठंति सेसा जहिच्छाए' इत्यावश्यकचूर्णिवचनादित्यर्थः, न च तत्र नियम इति न तद्व्याख्यानक्रियेति भणंतः श्रीहरिभद्रसूरिपादा एवं ज्ञापयंति-यदत्र यदृच्छया भण्यते तन्न व्याख्यायते, यत्पुनर्नियमतो भणनीयं तद् व्याख्यायते,

तद्, व्याख्यातं च वेयावच्चगराणमित्यादिसूत्रं,तथा चोक्तं—"एवमेतत्पठित्वेत्यादि यावत्पठंति वेयावच्चगराणमित्यादि", ततश्च स्थितमेतत्—यदुत वेयावच्चगराणमित्यप्यधिकारोऽवश्यं भणनीय एव,अन्यथा व्याख्यानासंभवात्, यदि पुनरेषोऽपि वैयावृत्त्यकराधिकार उज्जयंताद्यधिकारवत् कैश्चिद् भणनीयतया याहच्छिकः स्यात्तदा उर्ज्जितसेलेत्यादिगाथाद्वयमपि न व्याख्यायेत, व्याख्यातश्च नियमभणनीयसिद्धादिगाथाभिः सहायमनुविद्धसंबंधेनेत्यतोऽत्रुटितसंबंधायातत्वात् सिद्धाद्यधिकारवदनुस्यूत एव भणनीयः, अथ न प्रमाणं तत्र व्याख्यातसूत्रमिति चेत् एवं तर्हि हंत सकलचैत्यवंदनाक्रमाभावप्रसंगः,तत्रैवास्या एवं क्रमस्य दर्शितत्वात्, तदन्यत्र तथा तद्व्याख्यानाभावात्, व्याख्यानेऽप्येतदनुसारित्वात् तस्य, पश्चात्कालप्रभवत्वात्, नव्यकरणस्य तु सुंदरस्यापि भवनिबंधनत्वात्,तत्रोक्तस्य तूपदेशायाततया स्वच्छंदकल्पितताऽभावादिति परिभावनीयं बह्वत्र माध्यस्थ्यमनसा, विमर्शनीयं सूक्ष्मधिया, विचिंतनीयं सिद्धांतरहस्यं, पर्युपासनीयाः श्रुतवृद्धाः, प्रवर्तितव्यं असदाग्रहविरहेण, यतितव्यं निजशक्त्यानुकूल्यमिति । एवं द्वितीयदशमैकादशवर्जिताः शेषाः प्रथमाद्या द्वादशपर्यंता नव अधिकारा उपदेशायातललितविस्तराव्याख्यातसूत्रसिद्धा इति सिद्धं, आदिशब्दात् पाक्षिकसूत्रचूर्ण्यादिग्रहः, तत्र सूत्रं—'देवसक्खिय'त्ति, अत्र चूर्णिः—विरइपडिवत्तिकाले चिइवंदणाइणोवयारेण अवस्सं जहासंनिहिया देवया संनिहाणंमि भवन्ति,अओ देवसक्खियं भणियंति, अयमत्र भावार्थः—तावद् गणधरैर्दार्ढ्यार्थं पंचसाक्षिकं धर्म्मानुष्ठानं प्रतिपादितं, लोकेऽपि व्यवहारदार्ढ्यस्य तथा दर्शनात्, तत्र देवा अपि साक्षिण उक्ताः, ते च चैत्यवंदनाद्युपचारेणासन्नीभूता साक्षितां प्रतिपद्यंते, चैत्यवंदनामध्ये च तेषामुपचारः कायोत्सर्गस्तुतिदानादिः क्रियते, अन्यस्य तत्रासंभवादश्रुतत्वाच्च, ततश्चैवमायातं—यथा चैत्यवंदनामध्ये देवकायोत्सर्गादि करणीयमेव, अन्यथा तत्रान्यत्तदुपचाराभावे देव-

साक्षिकत्वासिद्धेः, चूर्णिकारेण तथैव व्याख्यातत्वान्निश्चीयते, तच्चैतद् देवसक्खियंतिसूत्रप्रामाण्यात्, एवमेव पूर्वापरविरोधाभावाद्, उक्तं च सूचकत्वं ललितविस्तरायामप्यस्य, तथा चोक्तं "व्याख्यातं सिद्धेभ्यः" इत्यादि सूत्र"मिति, तथा इदमेव वचनं ज्ञापकमिति, वचनं सूत्रं च पर्यायौ, एवं च सूत्रसिद्धा अप्येते नव अधिकारा इति सिद्धं, न च ज्ञातं तावत् प्रथमतृतीयचतुर्थपंचमषष्ठसप्तमाष्टमनवमद्वादशेति नवाधिकारा एवं सिद्धांताद्यनुसारेण भण्यंते, परं भवद्भिर्बार अहिगारा इति प्राक् प्रतिज्ञातं ततः शेषाः कुतः प्रामाण्यात् पठ्यंते इत्याशंक्याह–'तिन्नि सुये'त्यादि, त्रयोऽधिकाराः पुनः 'सुय'त्ति 'ते लुग्वे'ति पूर्वपदस्थबहुशब्दलोपात् ये बहुश्रुतास्तेषां पारंपर्येण–गीतार्थपूर्वाचार्यसंप्रदायेन भण्यंते, पारंपर्यागतस्यार्थस्य स्वमत्या निषेधयितुमशक्यत्वात्, तन्निषेधे निह्नवमार्गानुयायितापत्तेः, उक्तं च द्वितीयांगनिर्युक्तौ–आयरियपरंपरएण आगयं जो उ अप्पबुद्धीए। कोवेइ छेयवाई जमालिनासं स नासिहिइ॥१॥त्ति, अशठाचरितेन च आज्ञारूपत्वात्, तथापि निषेधे जिनाशातनाप्रसंगात्, तथा च कल्पभाष्यं–आयरणाविहु आणा अविरुद्धा चेव होइ आणत्ति। इहरा तित्थयरासायणत्ति तल्लक्खणं चेय॥१॥मित्यादि, अथवा सुयपरंपरयत्ति यथा श्रुतस्य व्याख्यानं निर्युक्तिस्ततोऽपि भाष्यचूर्ण्यादयः एवं श्रुतपारंपर्येण, अयमर्थः–यथा सूत्रे चैत्यवंदनातपः श्रुतस्तवं यावदुक्तं, निर्युक्तौ तु सिद्धाण थुई य किइकम्मंति श्रुतस्तवस्योपरि सिद्धस्तुतिर्भणि , चूर्णौ तु सिद्धस्तुतेरप्युपरि श्रीवीरस्तुतिद्वयं व्याख्याय भणितं–'जहा एए तिन्नि सिलोगा भन्नंति, सेसा जहिच्छाए'त्ति, ततश्च यथा निर्युक्त्यादिव्याख्याताः सिद्धादिगाथास्तिस्रो भण्यंते तथा उज्जयंताद्यपि भण्यते, चूर्णिकारेणानिषिद्धत्वादिच्छाद्वारेणानुज्ञातत्वाच्च, तथाहि–सेसत्ति, अनेन उज्जयंतादिगाथारितस्रो प्रतिपादिताः, असतो भणनाभावात्, जहिच्छाए इत्यनेन तु वंदनकरणेच्छावतां उज्जितादिगाथाभणने स्वाभिमतत्वं द-

र्शयति, अनभिमतस्येच्छायोगाभावात्, येषां हि उज्जयंतादिवंदितुमिच्छातिशयस्ते भणंतु नाम उज्जयंतादिगाथाः, नात्र दोषो, जिनबहुमानतया कर्मक्षयहेतुत्वात् तत्प्रवृत्तेरित्यर्थः, अथ के ते त्रयोऽधिकारा एवं श्रुतपारंपर्येण भण्यंते इत्याह—'बीओ' इत्यादि, द्वितीयो 'जे अ अईये'त्यादिरूपः दशमः 'उज्जिंते'त्यादिलक्षणः एकादशः 'चत्तारी'त्यादिस्वरूपः, एते त्रयः इत्यर्थः॥ अमुमेवार्थं भाष्यकृत् स्पष्टयन्नाह—

**आवस्सयचुण्णीए जं भणियं सेसया जहिच्छाए। तेणं उज्जिंताइवि अहिगारा सुयमया चेव ॥४९॥**

आवश्यकचूर्णौ प्रतिक्रमणाध्ययने यद्—यस्माद् भणितमिदं, तद् भणितमेव दर्शयति—सेसया जहिच्छाए, भण्णंतीति प्रकृतं, शेषाः—सिद्धाणं १ जो देवाणवि २ एक्कोऽवीति ३ गाथाभ्यो अन्या गाथा उज्जिंतसेलेत्यादिका यदृच्छया, अयमर्थः—यस्य भावनातिशयतो नेमिनाथादि वंदितुं वांछा वर्त्तते स भणतु नामैतां गाथां, न दोषः, संवेगादिकारणत्वेन दर्शनविशुद्धिहेतुत्वात्, तस्याश्च मोक्षांगतया कर्त्तव्यत्वात्, मोक्षस्य चाक्षेपेण प्राप्तुमिष्टत्वात्, तदर्थमेव च सकलधर्म्मानुष्ठानप्रवृत्तेः, यतश्चैवं शेषा गाथाश्चूर्णिकृता भणितास्तेन कारणेनेदं निश्चीयते यदुत पूर्वोक्ता नवाधिकारास्तावत् सूत्रसिद्धा एव, येऽपि चोज्जंतादयोऽधिकारास्तेऽपि श्रुते—चूर्ण्यादिरूपे श्रुतविवरणे पदेऽपि पदसमुदायोपचारात् मता एव अभिमता एव, अनभिमते सतां प्रवर्त्तयितुं योगाभावात् इच्छायां भणितत्वात्, अन्यथाऽनाप्तत्वप्रसंगात्, अनिषिद्धत्वात् ॥३८॥ आह—उज्जिंताइवित्यत्रादिशब्देन चत्तारीत्येकादश एवाधिकारोऽनुमीयते क्रमानुविद्धत्वात् न पुनर्द्वितीयः, तस्यान्यत्र पाठाद्, अतः स कथं भण्यते इत्याशंक्याह—

**बीओ सुयत्थयाइइ अत्थओ वण्णिओ तहिं चेव। सक्कत्थयंते पढिओ पुव्वायरिएहिं पयडत्थो ॥५०॥**

न केवलं दसमैकादशावधिकारौ चूर्णिकारभणितत्वात् भण्येते, किंतु द्वितीयोऽपी पिर्गम्यः, जे य अईयेत्यादिलक्षणोऽप्यधिकारः श्रुतस्तवस्य चतुर्थदंडकस्य आदौ पुक्खरवरदीतिगाथायां अर्थतो-अर्थमाश्रित्य वर्णितो-व्यावर्णितस्तत्रैव-आवश्यकचूर्णाविव, अयमत्र भावार्थः-द्वितीयाधिकारार्थो द्रव्याऽर्हद्वंदना, सा च तत्र भणिता, तथाहि-उक्कोसपएणं सत्तरिं तित्थयरसयं जहण्णपएण वीसं तित्थयरा, एए ताव एगकालेणं भवंति, अईया अणागया अणंता ते तित्थयरे नमंसामित्ति एवं चूर्णिव्याख्यातार्थस्वरूपत्वेन चूर्ण्युक्त एवायमपीति भण्यते, ननु यद्येवं चूर्ण्युक्तार्थतयाऽयं भण्यते तर्हि तत्रैव भण्यतां, किमन्यत्र पाठेनेत्याह-शक्रस्तवांते-प्रणिपातदंडकानंतरं पठितो-भणितः पूर्वाचार्यैः-पूर्वैरनुयोगकृद्भिः, शक्रस्तवांतेऽस्य स्थानात्, भावार्हद्वंदनानंतरं द्रव्यार्हद्वंदनायाः क्रमप्राप्तत्वात्, प्रथमाधिकारेऽपि नवमसंपदि किंचित्तद्भणनात्, अस्य तु तद्विस्तरार्थत्वाद्, इत्थमेव च बहुभव्योपकारदर्शनात् भावप्राधान्याश्रयेण च पश्चानुपूर्व्या चैत्यवंदनायाः प्रारंभात्, तस्या अप्यागमेऽनुज्ञातत्वात्, श्रुतस्तवादौ त्वस्य पाठेऽनानुपूर्व्या अप्यसंभवात् तन्मध्यपाठेऽपि व्यत्याम्रेडितदोषप्रसंगात्, शक्रस्तवांतभणने तु दोषासंभवात्, दंडकांतेऽन्यस्यापि स्तुतिस्तवादेर्भणनादित्येवं निर्दोषत्वेन पूर्ववृद्धैः शक्रस्तवांते अयं पठितस्तथैव भण्यते, वृद्धाचरितस्य जीतव्यवहाररूपत्वात्, उक्तं च-"जीयंति वा करणिज्जंति वा आयरणिज्जंति वा एगट्ठा" तथा "वत्तणुवत्तपवत्तो बहुसो जासेविओ महाणेण। एसो य जीयकप्पो पंचमओ होइ ववहारो ॥१॥ वत्तो नामं इक्कसि अणुवत्तो जो पुणोवि वियवारं। तइयट्ठाण पवत्तो सुपरिग्गहिओ महाणेण॥२॥त्ति, वृत्त एकदा नवो जातः पात्रबंधग्रंथ्यादिवदित्यादि, तथा, प्रकटोऽर्थः—सुगमार्थः, कृत इति शेषः, बालादिनाऽप्येवं भभाववृद्धैः, चूर्ण्युक्तमर्थं हि केचदेव जानते, एवं तु पाठे मंदमतीनामपि भवति यथा वयं त्रिकालभाविनो जिनानधुना वंदामहे,

ततश्च सुलभ एव शुभभाववृद्धिः, बोधनिमित्तत्वात्तस्य इत्यलं प्रसंगेन ॥ ३७ ॥ एवं च द्वादशाधिकारस्वरूपं निरुप्य तद्भणने तात्पर्यार्थं प्ररुपयन्नाह—

असढाइन्नऽणवज्जं गीयत्थअवारियंति मज्झत्था । आयरणाविहु आणत्तिवयणओ सुबहु मन्नंति ॥ ५१ ॥

अशठेन–निर्म्मायेन, एतेन चास्याविप्रतारकत्वमाह, आ इति मर्यादया सूत्रोक्तया गुरुलाघवचिंतयेत्यर्थः, अनेन चाचीर्णकर्त्तुः प्रमाणत्वं दर्शयति, अगीतार्थस्य प्रमाणत्वायोगात्, आचरितस्य तु सूत्रानुसारित्वं गुरुलाघवचिंतया कृतस्य सूत्रेण सहपूर्वापरविरोधाभावात्, चीर्ण्णं–चरितं देशकालाद्यपेक्षया गुणाधायित्वेन बहुभव्योपकारीतिकृत्वा अशठाचीर्णं, तथा अनवद्यं–निर्दोषं जिनस्तुत्यादिरूपतया कर्म्मक्षयहेतुत्वात्, तथा गीतार्थैः–तदन्यैस्तत्कालवर्त्तिभिर्न निवारितं, शोभनत्वादेव, दर्शनादिविशोधकत्वाद् जिनस्तुत्यादेः इति–एवं यत् बहुबहुश्रुतसंविग्नपूर्वाचार्यसंमतमित्यर्थः, तत् सुबहु मन्यंते इति गाथांते संबंधः, के इत्याह–मध्यस्थः कुग्रहकलंकाकलुषितचेतोवृत्तित्वेन रागाद्यस्पृष्टाः, उक्तं च–"जो नवि वट्टइ रागे नवि दोसे दुण्ह मज्झयारंमि । सो हवई मज्झत्थो सेसा सव्वे अमज्झत्था॥१॥"त्ति, अन्यथा धर्म्मानर्हत्वाद्, आह–"रत्तो दुट्ठो मूढो पुव्विं वुग्गाहिओ य चत्तारि । एए धम्मअणरिहा अरिहो पुण होइ मज्झत्थो॥१॥"त्ति, आचरणापीति, न केवलं सूत्रोक्तमेवाज्ञा, किंतु आचरणापि संविग्नगीतार्थाचरितमपि आज्ञैव हुरेवार्थे, सूत्रोपदेश एव, आतीर्थानुवर्त्तिजीताख्यपंचमव्यवहाररूपत्वात्, आह च—"बहुसुयकमाणुपत्ता आयरणा धरइ सुत्तविरहेऽवि । विज्झाएऽवि पईवे नज्जइ दिट्ठं सुदिट्ठीहिं ॥१॥ जीवियपुव्वं जीवइ जीविस्सइ जेण धंमियजणम्मि । जीयंति तेण भन्नइ आयरणा समयकुसलेहिं ॥२॥ तम्हा अनायमूला हिंसारहिया सुझाणजणणी य । सूरिपरंपरत्ता सुत्तं व पमाणमायरणा ॥३॥

इत्येवं यद् वचनं–सूत्रं तथा कल्पनिर्युक्तिः–आयरणाविहु आणा अविरुद्धा चेव होइ आणत्ति । इहरा तित्थयरासायणत्ति तल्लक्खणं चेयं ॥१॥ असढेण समाइण्णं जं कत्थइ केणई असावज्जं । न निवारियमन्नेहिं बहुमणुमयमेवमाइण्णं॥२॥न्ति, तस्मात्तद्वचनप्रामाण्यात् सुष्ठु–यथातथ्यस्य प्ररूपणाद्यतिशयेन 'बहुमानो मानसी प्रीति'रिति वचनात्, यत उक्तं–"अवलंबिऊण कज्जं जं किंचिवि आयरंति गीयत्था। थोवावराहबहुगुण सव्वेसिं तं पमाणं॥१॥"ति, यतः–"संविग्गा विहिरसिया गीयत्थतमा सूरिणो पुरिमा । न य ते सुत्तविरुद्धं सामायारिं परूविंति ॥२॥ अविय–जं बहुखायं दीसइ न य दीसइ कहवि भासियं त्ते । पडिसेहोऽवि न दीसइ मोणं चिय तत्थ गीयाणं ॥३॥" मित्यादि ॥ सांप्रतं चउरो थुइत्ति षोडशं द्वारं विवृण्वन्नाह—

अहिगयजिणपढमथुई बीया सव्वाण तइय नाणस्स। वेयावच्चगराणं उवओगत्थं चउत्थथुई ॥ ५२ ॥

यस्य मूलबिंबादेः पुरतश्चैत्यवंदना कर्तुमारभ्यतेऽसावधिकृतजिन उच्यते तमाश्रित्य प्रथमा स्तुतिर्दातव्या, तन्नामादिगर्भा सामान्येन जिनगुणोत्कीर्त्तनरूपा वेत्यर्थः, उक्तं च ललितविस्तरायां–"अत्रैवं वृद्धा वदंति–यत्र किलायतनादौ वंदनं चिकीर्षितं तत्र यस्य भगवतः संनिहितं स्थापनारूपं तं पुरस्कृत्य प्रथमः कायोत्सर्गः स्तुतिश्च,तथा शोभनभावजनकत्वेन तस्यैवोपकारित्वा"-दिति१, तथा द्वितीया स्तुतिः सर्वेषां जिनानां, प्रायो बहुवचनादिगर्भा सर्वजिनसाधारणेत्यर्थः, अन्यथाऽन्यकायोत्सर्गेऽन्या स्तुतिरिति न सम्यग्, अतिप्रसंगादिति, तथा तृतीया स्तुतिर्ज्ञानस्य श्रुतज्ञानमाहात्म्यवर्णनपरेत्याम्नायः,तथा च ललितविस्तरा–"ऐतिह्यमेतदि"ति वृत्तिः, पंजिकायां–संप्रदायश्चायं यदुत तृतीया स्तुतिः श्रुतस्ये"ति३, चतुर्थी स्तुतिः पुनर्वैयावृत्त्यकराणां–यक्षांबाप्रभृतीनां सम्यग्दृष्टिदेवतानां, किमर्थमित्याह–उपयोगार्थं–स्वकृत्येषु तेषां सावधानतानिमित्तं, भवति च गुणोपबृंहणतस्तद्भाव-

वृद्धिः, ततश्च स्वकार्यकारित्वोपयुक्तता, जगत्प्रसिद्धमेतत् यत्प्रशंसातः सोत्साहं कार्यकरणादर इति, तुशब्दो विशेषकस्तेन 'याः श्रुताङ्गीशासनदेवतादिविषयाः स्तुतयस्ताः सर्वा अपि चतुर्थस्तुतौ निपतंति, गुणोपबृंहणद्वारेण तासामप्युपयुक्ततादिफलत्वात्, स्तुतियुगलेषु तथानिबंधनात्, गुणोत्कीर्त्तनस्य द्वितीयस्तुतिरूपत्वात्, तथाहि —जिनज्ञानस्तुतिर्वंदनाद्यात्मकत्वादेका गण्यते, वैयावृत्त्यकरादिस्तुतयस्तु द्वितीया गुणोत्कीर्त्तनादिरूपत्वाद्,एवमेव युगलत्वसिद्धेः, भावितं चैतत् पंचमे वंदनाद्वारे, अत एव क्वचित् युगले चतुर्थी स्तुतिः 'सर्व्वे यक्षांविके'त्यादि वैयावृत्त्यकराणां, क्वापि च 'भूयासुः सर्वदा देवा देवीभि'रिति सामान्यतः सर्वदेवतानां, कुत्रापि 'गौरी सैरेभे'ति विद्यादेवतानां, अन्यत्र 'निष्पंकव्योमनीले'ति देवविशेषविषया 'एकत्र विकटदशने'ति देव्या एव, कुत्रचिच्च 'आमूलालोलधूली'त्यादि श्रुतदेवतायाः, इत्यादि परिभावनीयमिदं सूक्ष्मधिया कुग्रहविरहेण। कायोत्सर्गविषयेऽपि बहु विमर्शनीयं यतो दैवसिकावश्यकमध्ये सामान्यतो वैयावृत्त्यकरान् विमुच्य केवलश्रुतदेवतादेः कायोत्सर्गकरणं, पाक्षिकादौ तु भुवनदेव्याः, दीक्षादौ तु शासनदेव्यादीनामपि, इत्यलं प्रसंगेन, तत्त्वं तु परमर्षयो विदंतीति। स्तुतयश्चैताः—जिनं यशःप्रतापास्तपुष्पदंतं समंततः। संस्तुवे यत्क्रमौ मोहपुष्पदंतं समंततः॥१॥ प्रातस्तेऽङ्घ्रिद्वयी येन, सरोजास्य समा! नता। त्वयाऽस्तु जिनधर्माब्जसरोजास्य समानता ॥२॥ वंदे देव! च्युतोत्पत्तिव्रतकेवलनिर्वृतिम्। विश्वार्चितच्युतोत्पत्तिव्रतकेवलनिर्वृतिम् ॥३॥ चतुरास्यं चतुष्कायं, चतुर्धावृषसेवितम्। प्रणमामि जिनाधीशं,चतुर्धावृषसेऽवितम् ॥४॥ जिनेन्द्रानंजनश्यामाकल्याणाब्जहिमप्रभान्। चतुर्विंशतिमानौम्यकल्याणाब्जहिमप्रभान् ॥५॥ विलोक्य विकचांभोजकाननं नाभिनंदनम्। द्रष्टुमुत्कायते कोऽपि,काननं नाभिनंदनम् ॥६॥ तवानीश! सदा वश्याजितनिष्कोप नाथति। अहितो न हि तं स्वाभाजितनिष्कोऽपनाथति ॥७॥ सदातनाय सेनांगभव-

ध्ययनेषु पुनरेवं-तित्थयरा भगवंतो, तस्स चेव भत्ती कायव्वा, पूआवंद ईहिं हवइ। पूयंपि पुप्फामिसथुइपडिवत्तिभेयं चउविहंपि जहासत्तीए कुज्ज''त्ति, ललितविस्तरादौ तु "पुष्पामिषस्तोत्रप्रतिपूजानां यथोत्तरं प्राधान्य''मिति ॥ अत्रायं भावार्थः-पुष्पैः जात्यादिभिः प्रथमा अंगपूजा भवति,इह पुष्पग्रहणमादिमध्यावसानेषु पुष्पांजलिपुष्पपूजापुष्पप्रकरादिसमये सर्वत्र बहूपयोगिबहुशोभित्वाद्, अन्यथा पत्रफलजलगंधवस्त्राभरणाद्यप्यंगपूजायामुपयुज्यते, ततश्चात्र पुष्पेत्युपलक्षणं, तेन निर्माल्यापनयनमार्जनांगप्रक्षालनाद्यनंतरं नित्यं विशेषतश्च पर्वसु कुसुमांजलिप्रक्षेपादिपूर्वं धुनीकर्पूरजलादि चंदनकुंकुमादिकलिपतजलप्रभृतिसद्गृहजेतरगंधोदकादिभिः स्नपनं सुरभिसुकुमालवस्त्रेणांगलूछनं घनसारकुंकुमादिभिर्विलेपनांग्यादिविधानं गोरोचनामृगमदादिभिस्तिलकादिकरणं निःसपत्नरत्नसुवर्णमुक्ताभरणादिभिरलंकरणं विचित्रवस्त्रैः परिधापनं ग्रंथिमवेष्टिमपूरिमसंघातिमनिधानचतुर्विधप्रधानाम्लानमाल्यादिभिर्मालाटोडरमुगुटशिरस्कपुष्पगृहादिविरचनं जिनहस्ते नालिकेरबीजपूरपूगीफलनागवल्लीपत्रादिमोचनं धूपोत्क्षेपसुगंधवासप्रक्षेपाद्यपि च सर्वमंगपूजायां भवति, उक्तं चागमे-जिणपडिमाओ लोमहत्थएण पमज्जइ इत्यादि जाव विउलवट्टवग्घारियमल्लदामकलावं करेइ'' तथा बृहद्भाष्ये-"ण्हवणविलेवणआहरणवत्थफलगंधधूवपुप्फेहिं। कीरइ जिणंगपूआ तत्थ विही एस नायव्वा ॥१॥ वत्थेण बंधिऊणं नासं अहवा जहासमाहीए। वज्जेयव्वं तु तया देहंमिवि कंडुयणमाई ॥ २ ॥'' अन्यत्राप्युक्तं-'कायकंडूयणं वज्जे, तहा खेलविगिंचणं। थुइथुत्तभणणं चेव, पूयंतो जगबंधुणो ॥३॥'' उचियत्तं पूयाए विसेसकरणं तु मूलबिंबस्स। जं पडइ तत्थ पढमं जणस्स दिट्ठी सह मणेणं ॥४॥ (१९७) शिष्यः-पूआवंदणमाई काऊणेगस्स सेसकरणंमि। नायगसेवगभावो होइ कओ लोयनाहाणं ॥५॥ एगस्सायरसारा कीरइ पूआ वरेसि थोवयरी। एमावि इह अवण्णा लक्खिज्जइ निउणबुद्धीहिं ॥६॥(३९-४०) आचार्यः-

नायगसेवगबुद्धी न होइ एएसु जाणगजणस्स । पिच्छंतस्स समाणं परिवारं पाडिहेराई ॥७॥ (५०) ववहारो पुण पढमं पइट्ठिओ मूलनायगो एसो । अवणिज्जइ सेसाणं नायगभावो न उण तेणं ॥८॥ (५१) वंदणपूयणबलिढोयणेसु एगस्स कीरमाणेसु । आसायणा न दिट्ठा उचियपवित्तस्स पुरिसस्स ॥९॥ (५२) जह मिम्मयपडिमाणं पूया पुप्फाइएहिं खलु उचिया । कणगाइनिम्मियाणं उचियतमा मज्जणाईवि ॥१०॥ ( ५४ ) अविय–कल्लाणगाइकज्जा एगस्स विसेसपूअकरणेऽवि । नावन्नापरिणामो जह धम्मिजणस्स सेसेसु ॥११॥ (५३) उचियपवित्तिं एवं जहा कुणंतस्स होइ नावन्ना । तह मूलबिंबपूआविसेसकरणेऽवि नन्नत्थ ॥ १२ ॥ (भा.५५) किंच–जिणभवणबिंबपूआ कीरंति जिणाण नो कए किन्तु । सुहभावणानिमित्तं बुहाण इयराण बोहत्थं ॥१३॥ (१४२) जओ-चेइयहरेण केई पसंतरूवेण केइ बिंबेण । पूआइसया केई अन्ने बुज्झंति उवएसा ॥१४॥ (१४३) इति पुष्पाद्यैः प्रथमा अंगपूजा ॥

अथ द्वितीया अग्रपूजा भाव्यते–सा च प्रधानाहारेण आमिषापरपर्यायेण, यद्गौडः–उत्कोचे पलले न स्त्री, आमिषं भोज्यवस्तुनि' । तेनाशनादिना चतुर्विधेन भवति, तथाहि—इह होइ असणपूया वरखज्जगमोयगाइभक्खेहिं १ । दुद्धदहिपाणियाइभायणेहिं२ तह ओयणाईहिं३ ॥१॥ अत्र निशीथचूर्णिः 'संप्रति राजा रहग्गओ य विविहफलखज्जगभुज्जगे य कवड्डगवत्थमाई उक्किरणे करेइ' । अन्यत्रोक्तं–"नाणाफलेहिं व थएहि निच्चं"२ तथा वसुदेवहिंडौ मृगब्राह्मणप्रस्तावे "कयाइ य देवकज्जे सज्जियं भोयणं,साहवो उवागया,तिण्हवि जणाण समवाओ पडिलाभेमो"त्ति, कल्पे तु–'साहम्मिओ न सत्था तस्स कयं तेण कप्पइ जईणं । जं पुण पडिमाण कए तस्स कहा का अजीवत्ता? ॥१॥ संवट्टिमेहपुप्फा सत्थनिमित्तं कया जइ जईणं । न हु लब्भइ पडिसेहं किं पुण पडिमट्ठमारद्धं? ॥२॥" तृतीयखण्डे तु हरिकूटपर्वतप्रस्तावे–"विविहभक्खपाणगपडिपुन्ना निवेइया विचित्ता ब-

ली''ति, तथा निशीथे तु 'पभावईए देवीए 'पि बलिमाइं काउं भणिअं-देवाहिदेवो वद्धमाणस्सामी तस्स पडिमा कीरउत्ति वाहिओ कुहाडो, दुहा जायं, पिच्छइ सव्वालंकारविभूसियं भयवओ पडिमं'' तथा निशीथपीठे ''बलित्ति असिवोवसमननिमित्तं कूरो किज्जइ'' आवश्यके तु-''कीरइ बलित्ति तं आढगं तंदुलाणं सिद्धं, तओ जस्स मत्थए सित्थं वुज्झइ तस्स पुव्वुप्पन्नो वाही उवसमइ''इत्यादि। ''जलपूया जलभायणधारादाणाइ २ खाइमचलिया। फलदाणा अक्खयसरिसवाइणा मंगलादिविही ॥३॥'' तृतीयोपांगे-''जेणेव सिद्धाययणस्स बहुमज्झदेसभाए तेणेव उवागच्छइ २ दिव्वाए उदगधाराए अब्भुक्खेइ२''अन्यत्र तु ''पाणियपुन्नेहि य भायणेहिं'' वसुदेवहिंडौ तु ''विविहभक्खपाणगपडिपुन्ना निवेइया विचित्ता बली''; २। फलेष्वेवमावश्यकचूर्णिः ''पत्तपुप्फफलबीयमल्लगंधवण्णजाव चुण्णवासं वासंति''त्ति, निशीथे ''रहग्गओ विविहफलखज्जग'' इत्यादि, बृहद्भाष्ये त्वेवम्-''जो पंचवन्नसत्थियबहुविहफलसलिलभक्खदीवाई। उवहारो जिणपुरओ कीरइ नेवज्जपूआ सा (आमिससपज्जा) ॥३॥ (२०४) साइमपूयाइ पुणो नेयं पूगफलपत्तगुलपमुहं। पंचंगुलितललिहणाइ पुप्फपगराइ दीवाई॥२॥ प्रदीपारात्रिकनृत्याद्युपलक्षणमिदं, उक्तं च भाष्ये—''गंधव्वनट्टवाइयलवणजलारत्तयाइ दीवाई। जं किंचं तं सव्वंपि ओयरई अग्गपूआए (आमिसपूयाए च्चिय सव्वंपि तयं समोयरइ) ॥१॥ (२०५) तच्चागमे-''सरसेणं गोसीसचंदणेणं पंचंगुलितलेणं मंडलं आलिहइ२ चच्चए दलइ२ कयग्गाहगहियकरयलपब्भट्ठविप्पमुक्केणं दसद्धवण्णेणं कुसुमेणं मुक्कपुप्फपुंजोवयारकलियं करेइ२ धूवं दलयइ२'' यथा चात्राग्रपूजायां पुष्पपत्रगंधाद्युपयुज्यते तथाऽग्रपूजायामाहारोऽपि, तथा अशने दुग्धदध्यादि, पाने जलसुरसादि, खाद्ये फलाद्यक्षतादि, स्वाद्ये पत्रपूगकर्पूरादि, इति भाविता द्वितीया अग्रपूजा।

अथ तृतीया भावपूजा, सा च स्तुतिभिर्लोकोत्तरसद्भूततीर्थकरगुणगणवर्णनपरा भवाब्धिपद्धतौ मिमवीत, आह च [illegible] भावपूया ठाउं चियवंदणोचिए देसे। जहसत्तिचित्तथुइथुत्तमाइणा देववंदणयं॥१॥"ति। तथा निशीथे-'सो उ गंधारसावओ थयथुईहिं थुणंतो तत्थ गिरिगुहाए अहोरत्तं निवसिओ" तथा वसुदेवहिंडौ 'कयाइं च भाणुसिट्ठी सह घरणीए जिणपूयं काऊण पज्जालिएसु दीवेसु पोसहिओ दब्भसंथारगगओ थयथुइमंगलपरायणो चिट्ठइ, भयवं च गयणचारी अणगारो चारुनामा उवइओ, कयजिणसंथवो कयकायविउस्सग्गो य आसीणो", तथा "चारुदत्तो उवगओ, अंगमंदिरं पविट्ठो, जिणाययणचेडेहिं उवणीयाणि पुप्फाईणि, कयं अच्चणं पडिमाणं, थुईहिं वंदणं कयं, निग्गओ जिणभवणाउत्ति, वसुदेवो पच्चूसे कयसमत्तसावयसामाइयाइनियमो गहियपच्चक्खाणो कयकाउस्सग्गथुइवंदणो उइण्णावसरे कुसुमुच्चयं काउं" तत्तृतीयखंडे "खयरवहूसंसत्तथुइसयगुम्मंततीपयाहिणभमंतसिरिसंकुलाए पासिया महिम"त्ति, तथा 'गया मो सिद्धाययणं, थुईहिं वंदणं कयं'इत्यादि, तथाऽन्यत्र "वंदणं(दइ)उभओ कालंपि चेइआइं थय-त्थुईपरमो" एवं अनेकेषु स्थानेषु श्रावकादिभिरपि कायोत्सर्गस्तुत्याद्यैश्चैत्यवंदना कृतेत्युक्तं तत्केन लिख्यते इति भाविता तृतीया भावपूजापि। वेत्यथवा प्रकारांतरेण पंचाष्टसर्वोपचाररूपेण३ पूजात्रिकं भवति इतिशेषः, तथा च बृहद्भाष्यं-पंचोवयारजुत्ता पूया अट्ठोवयारकलिया य। रिद्धिविसेसेण पुणो नेया सव्वोवयारावि॥१॥(२०९) श्रीहरिभद्रसूरिभिरपि पूजाषोडशके भणितं–पंचोप-चारयुक्ता काचिच्चाष्टोपचारयुक्ता स्यात्। ऋद्धिविशेषादन्या प्रोक्ता सर्वोपचारेति॥१॥ तत्रैका पंचोपचारा, सा च प्रायः अंगपूजावि-षयेत्येकात्मिका, एषा च श्रीउमास्वातिवाचकेन प्रशमरत्यामेवमुक्ता–चैत्यायतनप्रस्थापनानि कृत्वा च शक्तितः प्रयतः। पूजाश्च गंधमाल्याधिवासधूपप्रदीपाद्यैः ॥१॥ अधिवासो गंधमाल्यादिभिः संस्कारविशेषः, दृष्टा चागमेऽधिवासपूजा युगपदेवं मिलनतो